श्रीमद्विश्वेश्वर-पाण्डेय-प्रणीता

# नवमालिका

(नाटिका)




-:सम्पादक:-

प्रो. बी. एल. शुक्ल शास्त्री एम. ए.

साहित्याचार्य

भाषा एवं अनुसन्धान-विभाग

विश्वविद्यालय, जबलपुर (म० प्र०)



-:प्रकाशक:-

'मालव-मयूर' कार्यालय

मन्दसौर (म० प्र०)

॥ श्रीः ॥

परमहंसस्वामिश्रीकृष्णानन्दतीर्थमहाराजानां स्मृतौ प्रवर्तितं
संस्कृत-संसारस्याद्वितीयं सचित्रं विचित्रं

मासिक पत्रम्

[ भारत—सर्वकारेण पुरस्कृतः ]

# मालव—मयूरः

१८ तमे वर्षे — २०२१ वि० संवत्
१२ संख्या — भाद्रपदमासः



'मालव-मयूर' एषः ,
प्रचरति दशपुरपत्तनात् समोदम् ।
आनन्दमीहमानो
निखिलानां भारतीयानाम् ॥

सम्पादकः

पं० रुद्रदेवत्रिपाठी एम. ए. साहित्य-सांख्ययोगाचार्यः
काव्यपुराणतीर्थः, संस्कृत-हिन्दीसाहित्यरत्नम्
साहित्यालङ्कारः

सहसम्पादकः

पं० जयदेवत्रिपाठी शाङ्करवेदान्ताचार्यः, भागवतभूषणम्

प्राप्तिस्थानम् :—

मालव-मयूरकार्यालयः, मन्दसौर (म. प्र.)

वार्षिकं शुल्कम् ५) मुद्राः — एकाङ्कस्य ०० = ५० नवपणकाः

# प्रकाशकीयम्

परेशकृपया 'मालव–मयूर'स्यायं द्वादशाङ्को विदुषां कर-योर्वर्तते । विशेषाङ्करूपेणेयं श्रीमद्विश्वेश्वर- -पाण्डेय -- प्रणीता 'नवमालिका' नाटिका पुरस्क्रियते । अस्याः सम्पादको मालव-मयूर-स्य पाठकानां सुपरिचितः पं श्रीबाबुलालशुक्ल महोदयः । एतेन महाभागेन सुदृढं परिश्रम्य अनेकाः प्राचीनाः कृतयः सुसम्पादिताः प्रकाशनपथं चानीता इति जानन्त्येव विद्वांसः । मालव-मयूरे चापि 'नव-ग्रहचरितम्, भैरव-विलास. पूर्वंप्रकाशनमाश्रितावेव

आशासे विद्वांसः सुरभारती सेवकस्यास्य परिश्रमस्य सत्कारं कुर्वन्तो ऽग्रेऽपि "मालव-मयूर" - संस्कृत-पत्रस्य माध्यमेन नवीनं साहित्यं पिपठिषवः सहयोगदानेन पत्रानुकूल - साहित्यसम्पदनु-प्रेषणेन चास्माकमुत्साहवर्धनं करिष्यन्तीति ।

—सम्पादकः

# PREFACE

This first edition of 'Navamalika Natika' by Vishveshvar Pandey is based only on one copy of the work found in the Madras Government Oriental Manuscripts Library. It is numbered (253), there and is a part of Ms No. 12441. It contains 59 pages, each page having nine lines. The date of copying is the 13th day of Bhadrāpada krishna Samvata 1977 ( 1920 A. D. ) No other correct and complete coqy of 'Navamalika Natika' has yet been found any where. My sincere thanks are due to the curator, Madras Government oriental ManuscriptsLibrary, who has so kindly supplied a transcript copy of the play and has thus come to my aid for the publication of this play.

Vishveshwar and His Navamalika ( नवमालिका )

---

Vishveshwaa Pandey the author of the play was the son of Laksmidhar of pandey family of Almora. His decendents of the ninth generation are now there. 1 He lived in the beginng of the 18th century. He was a literary genius and began writing when he was ten. Such men are rarely long lived and he died at the age of thirty four. His

works are many viz. अलंकार कौस्तुभ,[1] अलंकार कर्णाभरण,[2] अलंकार मुक्तावली [3] काव्य लीला, [4] काव्यरत्न [5] रसचन्द्रिका [6] मन्दारमंजरी [7] and commentaries on भानुदत्त & रसमंजरी and श्रीहर्ष & नैषधीय चरितम्। Among his plays are included रुक्मिणी परिणय (नाटकम्) शृंगार मंजरी [8] (सट्टकम्) and नवमालिका (नाटिका)

in Sanskrit Grammar he wrote an encyclopedic work on Astadhyayi viz. वैयाकरण सिद्धान्त-सुधानिधिः [9]। He is credited with writings of about twenty works. The present Natika is one of them.

The subject matter of the play is the amarous sports of Vijayasena, the Maharaja of Avantidesa with young maiden Navamalika an erstishile princess, who had gone astray into the flower garland of the queen Sarasika, and had been entertained as a maid

---

1. SKt Ch. 58. 268.
1. Printed Bombay N. S. P.
2. Ed. Bombay.
3. C. C. 1, 31, II, 137, Printed Benaras.
4. Printed Benaras; D. C, 8603.
5. Kavyamala No. 6.
6. Printed Benaras.
7. Printed Benaras.
8. Published in Deccan College Bulletin, Humanities section, 1960.
9 Published in Benaras (Chokhamba Sanskrit Series).

servant in her harem A detailed summary of the play is given in the Introduction in Sanskrit.

My sincere thanks are due to Prof. Dr. Hiralal Ja-in, M. A., D. Litt., Head of the Department of Sanskrit, Pali and praKrit and Dr. Raj Bali pandey M. A., D Litt, Head of the Department of Ancient Indian History and Culture, Institute of Languages and Research University of Jabalpur for there kind suggestions and my friend Shri Rudradeo Tripathi, M. A. the Ebitor of Malavamayoora Sanskrit monthly for his suggestions and his help in getting the play published in his SansKrit morthly

26th January, 1964
Institute of Languages
and Research Uniyersity
of Jabaldur, JABALPUR

Baboolal Shukla
SHASTRI M. A.
Sahityacharya

विश्वेश्वर-पाण्डेय-प्रणीता

# नवमालिका

( नाटिका )

सम्पादकः—प्रो० बी० एल० शुक्लः शास्त्री, जबलपुर

( नान्दी )

चित्तान्तर्विशदद्रिराजतनया नीलद्युतिच्छायया
संवीतस्य मृगत्वचा न वचसा संवृण्वतो विक्रियाः ।
भक्त्या पूर्वसमर्पितामिव तया सम्बिभ्रतोऽक्षस्रजं
वाचः पान्तु हरस्य कैतवबटोराहार्यधीमूलिकाः ॥ १ ॥

अपि च-

जयति रतिपतिज्याकर्षशिञ्जानभृङ्ग-
ध्वनिरनिभृतभेरीझांकृतिर्जैत्रयानम् ।
कुवलवनवनां भाववैदूर्यमेघ-
स्तनितमुपनिषद्गीरद्वयानन्दभूमेः ॥ २ ॥

( नान्द्यन्ते सूत्रधारः )

सूत्रधारः—अलमतिप्रसङ्गेन

राधापयोधरमये तपनीयपद्म—
कोशे हरेस्तनुरवत्वनुबिम्बिता वः ।
मानैकमानसतया नमदाननापि
मुग्धानवेक्ष्य *सहसा न जहावुदीक्षाम् ॥ ३ ॥

( नेपथ्यमवलोक्य ) आर्ये ! इत इतः

( प्रविश्य नटी )

नटी—अय्यउत्त ! आणविज्जदु । ( आर्यपुत्र ! आज्ञापयतु )

सूत्रधारः—प्रिये ! पारिषदा एवमादिशन्ति—

---

* मामवेक्ष्येति आदर्शपुस्तके पाठः ।

बभार यो महारत्नभारतीं भारतीभृताम् ।
स सुप्रसिद्धनामेह बुधो लक्ष्मीधराभिधः ॥ ४ ॥

तथाहि— स एवागान्मीमांसकतिलकसीमां स कविता—
सुधायाः प्रत्यग्रं व्यधित वसुधायामवतरम् ।
नवोनां सद्भावस्थितिमहिगवीनां स विदधे
प्रभावं दध्रेऽसौ गिरिमधि शतानन्दसवितुः ।५।

इदानीञ्च- वाग्देवता हृदयभूषण पारिजात—
स्रग्गुस्फनानुगुणपीतगुणस्य तस्य ।
सम्भावनाभिरुपबिभ्रदशून्यमन्त —
विश्वेश्वरेति विदितस्तनयस्तदीयः ॥ ६ ॥

तदनुबद्धया नवमालिकाभिधानया नाटिकया चाभिनीयमानया त्वया वयं विनोदनीया इति । तत्तदनुरूपमारभ्यताम ।

नटी—अनदिक्कमणिज्जो क्खु सामाइआणं अज्जस्स अ णिओओ। कीरिसं उण तस्स कइणो सामच्छम ?

[ अनतिक्रमणीयः खलु सामाजिकानामार्यस्य च नियोगः । कीदृशं पुनस्तस्य कवेः सामर्थ्यम् ? ]

नटः—अयि मुग्धे नात्र किञ्चिद्विचारयितव्यमस्ति ।

वैदूष्ये परिनिष्ठितः प्रतिपदामग्रेसरो यद्गुरुः
तत्तच्छास्त्रकृतश्रमा अपि बुधा यत्पक्षपातस्पृशः ।
विद्याभ्यासरतानुवृत्तिविदिते यस्य प्रसूतिः कुले
भारद्वाजमुनेः कुतूहलकरं किं तस्य न स्याद्वचः ॥ ७ ॥

नटी—( संस्कृतमाश्रित्य ) एवमेतत्

समक्षमपि वीक्षिता विधुकला विजातीव रुक्
न धूर्जटिजटातटान्वयधियं विना भासते ।
गुणप्रगुणताभृतामपि विलक्षणज्ञप्तये
महाजनपरिग्रहाः किल सहायमातन्वते ॥ ८ ॥

( नेपथ्ये )

सुष्ठु खल्विदमुपन्यस्यते ।

सूत्रधारः—( विलोक्य ) कथमयं मारिषः परिषदाज्ञप्तं विलम्ब-मसहमानः प्रगृह्यामात्यस्य नीतिनिधेर्भूमिकामागत एव । तदा आवाम-प्यनन्तरभूमिकापरिग्रहाय गच्छावः ।

( इति निष्कान्तौ )

प्रस्तावना

( ततः प्रविशति नीतिनिधिः )

नीतिनिधिः—सुष्ठु खल्विदमुपन्यस्यते ( 'गुणप्रगुणताभृता-मित्यादि' (१।८) पठित्वा ) कथमन्यथा—

देवादेशात्ककुभमभितो दक्षिणां जेतुकामो,<br>
वृक्षाणां न क्षणमपि नल क्षोणिदेशानविक्षम् ।<br>
श्रीरामेणोषितमिह चिरायेति मत्वा परन्तु,<br>
प्रागेवाहं परिकलयितुं दण्डकारण्यमैच्छम् ।। ९ ।।

तत्र च विधिवशेन

तत्रत्यां वनदेवतामिव नवोद्भिन्ने स्थिता यौवने,<br>
कन्यां कामपि कन्ययोः सवयसोर्मध्ये स्थितामन्ययोः ।<br>
दृष्ट्वा तन्मुखतस्तदीयकमितुस्साज्यमाम्रेडितं,<br>
श्रुत्वा दिव्यसरस्वतीरितवरं दित्सामि तां स्वामिने ।।१०।।

सा हि कन्यामयेयं कन्यका काचिदबान्धवा वनभूमौ समासादिता । प्रज्ञातिशयशालितया सकलकलाकलापेषु देव्या अन्तेवासिनी भवितु-मर्हतीत्यभिधाय देव्याश्चन्द्रलेखाया उपहारीकृता । प्रसाधितदेवादेशस्य देवपादमूलमुपगतस्य कियानपि समयो निवृत्तः । अद्यापि सा कन्यकास्म-त्स्वामिनोऽवन्तिपतेर्महाराजस्य विजयसेनस्य चक्षुर्गोचरतां नासादित-वती । अनन्तरं दैवमेव प्रमाणम् । ( विलोक्य ) अये ! कथम्—

नवविकसितसिन्धुवारपुष्पै—
विहसितचैत्ररथप्रथाभिमानम् ।
प्रमदवनमुदीक्षितुं नृपोऽयं
सममुपगच्छति रौहिणायनेन ॥ ११ ॥

तदादेशव्यतिरेकेण नायमस्मद्विधानामुपसर्पणावसरः ।

( इति निष्क्रान्तः )

विष्कम्भकः ।

( ततः प्रविशति राजा विदूषकश्च )

राजा—वयस्य रौहिणायन ! निवेदितं सारसिकया विहारेच्छया देवी केलीकौतुकनामधेयमुपवनमवतीर्णेति । तथापि लोकव्यवहारतन्त्राणां दुरतिक्रमतया धर्मासनमध्यासीनैरियच्चिरायितमस्माभिः । इदानीन्तु अविदितप्रवेश एव देव्याः वनविहारकौतूहलमनुभवितुमिच्छामि यतः—

उपरोधभयात् किलान्तरायात्
प्रभवन्त्युल्लसितुं तथा न तावत् ।
रहिता महिलाजनस्य येन
व्यवहारा हि विलक्षणा भवन्ति ॥ १२ ॥

विदूषकः—इदो एदु भवं ( किञ्चित् परिक्रम्य ) भो वअस्स ! इमाए रयणमयीए भूमीए किरणसंवलणपरिभट्टो मग्गो । किं वि मे ण पडिभाइ । [ इतएतु भवान् ( किञ्चित् परिक्रम्य ) भो वयस्य ! अस्या रत्नमय्या भूम्याः किरणसंवलनपरिभ्रष्टो मार्गः । किमपि मे न प्रतिभाति ।]

राजा—वयस्य ! नेह दुर्लभं प्रतिभानम् ।

गताया प्राग्देव्याः परिजनपदोपन्यसनतो
मिलि··· ····· इव वलिता भाति पदवी ।
अशोकप्रोद्भूतैरिव किसलयैरावृतमति
······श्रित्याभिमुखमुपा ······· ॥ १३ ॥

( विदूषकः तथाऽनभिजानन्नेव परिक्रामति )

राजा—अपि सुलभमिदानीमभिज्ञानम् ?

विदूषकः - वअस्स, किं वि णाम एक्कमयलोअणदत्तणए ण सम्भावएदि । ण दिण्णमग्गेहिं परावट्टिदुं वि पहविस्सं । [ वयस्य किमपि नाम ऐक्यमयलोचनत्वात् न सम्भाव्यते । न दृष्टमार्गात् परावर्तितुमपि प्रभवामि । ]

राजा—( आरामप्रवेशमभिनीय ) वयस्य ! अभिनवावतीर्णसुरभिसमयनिबन्धनमिदं दृश्यतामुपवनस्य रामणीयकम् ।

पृथग्जातोयानामपि सुमनसां सौरभभरा
विरावा भृङ्गाणामपि कलरवाणां कलकलाः ।
मिथो मिश्रीभूता युगपदुपयन्तो विषयतां
मतौ तस्यां तस्या विदधति चमत्कारमसमम् ॥१४॥

( अन्यतो विलोक्य )

भानोरौदयिकैः करैरिव समालग्नैः प्रवालोत्करैः
शैवालैरिव मञ्जरीसमुदयैः कर्णावतंसोचितैः ॥
कामोज्जीवनमन्त्रगीतिभिरिव स्फीताभिरुद्गीतिभिः
भृङ्गाणां द्युतिरीषदन्यविषया लभ्या शिरोषद्रुमैः ॥१५॥

अपि च—

आमादैरतिमेदुरैरथ पृथग्रूपैः प्रसूनैर्मिथः
तत्तत्पुष्पमरन्दबिन्दुशिशिरैर्मन्दायितैर्मारुतैः ।
आरब्धैःपिकसुन्दरीभिरभितो दोलासु कोलाहलै-
रारामः करणाय कस्य न भवेदेष प्रियं भावुकः ॥१६॥

विदूषकः—भो वअस्स ! रसणासअलाहेण ताएव्व दुल्लहेण होदव्वम् । [ भोवयस्य ! रसनास्वादलाभेन त एव दुर्लभेन भवितव्यम् ।

( नेपथ्ये )

अज्ज, किं एव्वं भणासि । अतणो अवराहेण देवीए आदेसेण तुए अहिंस अ उज्जाणे रसनाविसअलाहो केति अ वारं अ ण अणुदि-

इश्रो। [ आर्य, किमेवं भणसि। अतनोरपराधेन देव्या आदेशेन तवा-स्मिन्नुद्याने रसनाविषयलाभो कतिवारंच ननु दिग्धः ]

राजा—( विहस्य ) वयस्य ! अदृश्यवक्तृकमेवोत्तरं लब्धम्।

( प्रविश्य सारसिका राजानं विलोक्य )

सारसिका—( स्वगतम् ) कहं महाराश्रो ! ( प्रणम्य ) जेदु जेदु महाराश्रो। [ कथं महाराजः ! ( प्रणम्य ) जयतु जयतु महाराजः )

राजा—क्वेदानीं देवी ?

सारसिका—( संस्कृतमाश्रित्य ) इमां सिन्दुवारवीथिकापरिवर्तिनीं तमालावलीमतिक्रम्य कुसुमान्यवचिनोति देवी। अहं तु देव्या समादिष्टा यथार्यपुत्रः कदाचिद् इहागन्तुकामस्तस्यात्तदागमनात् पूर्वमेव मह्यं निवेदनीयमिति।

राजा—वयस्य ! पश्य

यथैव विश्रम्य विचेष्टितानि
यूना तदीयानि दिदृक्षितानि।
तथैन तेभ्यो वरवर्णिनीना
...ध्रुवं विवरीषितानि ॥ १७ ॥

सारसिका—( स्वगतम् ) अश्रं क्खु देवीएप्पाश्रो अत्तक्किदोपणदो। अज्जउत्तो एसट्ठिश्रं एम्बमालिश्रं वा पेक्खनुत्ति। [ अयं खलु देव्या अभिप्रायः अतर्कितोपनतः। आर्यपुत्र अत्रस्थिताम् आम्रमालिकां वा प्रेक्षताम् इति। ]

राजा—( तां प्रति ) अस्मदागमनानभिज्ञयेव भवत्या यथादिष्टमनुष्ठातुमितो बहिरेव गम्यताम्।

सारसिका—देवीए णिदेसं अवेक्खिश्रा गरुश्रो क्खु महाराअस्स णिदेसो। एवं अ पिअसहीए णवमालिआए को वि उपआरो संभावी अदि एसो अ देवी अप अ।रंतरेण अणुणेदव्वा ( प्रकाशम् ) जं देवो आणवेदी। [ देव्याः निदेशपेक्षया गुरुकः खलु महाराजस्य

निदेशः । एवं प्रियसख्याः नवमालिकायाः कोऽप्युपकारः सम्भाव्यते । सच देव्यपकारमन्तरेणानुनेतव्यः ( प्रकाशम् ) यद्देनः आज्ञापयति । ]

( इति निष्क्रान्ता )

राजा—( परिक्रामन् पवनस्पर्शमनुभूय )

एते ते कामहेलाजनचिकुरलवान्दोलना सावहेला
आमृन्दन्तः सुवेलाचलशिखरसमुन्मीलदेला वनान्तान् ।
आतन्वन्तोऽतिवेलाद्रमिडमृगदृशां कामकेलावभीप्सा
मायाता हन्त वेलापरिसरविहितोल्लोलखेलाः समीराः ।१८।

अपि च—

कार्णाटीकर्णपूरोन्मिलनपरिमला मालवीभालवीथी—
सिन्दूरं दूरयन्तो विरचितनतयः कुन्तलीकुन्तलानाम् ।
संवृत्तानां ललाटाङ्गणजलकणिकावाललाटाङ्गनानां,
निर्बन्धा गन्धसाराचलकृतजनयो गन्धवाहा वहन्ति ।। १९ ।।

विदूषकः—एदे सकिदकं विवामणअणाप्ते आंम्बुविं हुक्वरा,
सच्छन्दं मलअद्धिचंदणवणासंगेण आमोइआ ।
गोला केलिकला सुहेल्लितरली किंअंतसेहालिआ,
साहादाहिणमारआ विरहिणं हा हा महाहामहा ।।२०।।

[ एते शङ्कितकं ............................................

स्वच्छन्दं मलयद्धिचन्दनवनासङ्गेन आमोदिना ।
.......................................................... शेफालिका
.................................................................. ।। ]

राजा —वयस्य ! अनुसन्धीयताम् —

वल्लीनां विटपावकर्षण भवत्सम्प्रेरणा तत्क्षणे,
बालानां रसनावलोकलकलैरुन्मिश्रतां बिभ्रतः ।
सभ्रान्तोः पमानमत्तमधुकृत्सन्दोह कोलाहला,
यत्र श्रावणगोचरा तदधुना देवीसदेशं पदम् ।। २१ ।।

दूरत्वं प्रतिवेदिवांसि कुसुमान्यादातुमाकाङ्क्षया,
....... तुल्यकालमुदयत्कूर्वासपर्याप्तत: ।
मूलावच्छिदया दृशोर्विषयतापन्नार्धवक्षोरुहा,
तेनैव कृशितत्रिका युवतयो दृश्यत्वमाबिभ्रते ।। २२ ।।

किञ्च—अप्यग्रतः सुमनसः परिगृह्य बह्वी-
स्तासां गृहीतुमपरास्स्पृहयन्तु भूयः ।
इत्युत्तरोत्तरममूरनवस्थमेतत्
कौतूहलं बहलयन्ति महद्विहारे ।। २३ ।।

विदूषकः—(सम्ममभिनीय) भो ! ण किं वि पेक्खामि । [भोः न किमपि पश्यामि ।]

राजा—कथं भवदनुसारमात्रेण पदान्युपन्यसन्नहमपि विस्मृतमार्गः संवृत्तः । पश्य—

नवसारसान्धिवेलान्धकारलेखेव दृष्टिविषयस्य ।
व्यवधापिनिमहमध्ये तमालमालेयमापन्ना ॥ २४ ।।

(स्वयं यथाभिमतमार्गमभिनीय) वयस्य ! दृश्यतामियम्
सीमन्ते नवसिन्धुवारकुसुमैर्मौक्ताफलीमावलीं,
रक्ताशोकभुवां पुन स्सुमनसां काञ्चीं नितम्बस्थले ।
काञ्चेय स्तबकात्मकं चरणयोर्मञ्जीरयुग्मं गले,
नानापुष्पमयीं स्रजं विदधती देवी लतेवापरा ॥ २५ ।।

कथमनतिचिरादेव पर्वतोपमसन्निवेशः प्रसूनराशिः संवृत्तः । वयस्य ! पश्यामि । यथा—एकतो रिक्तकरा एव सहचर्यस्तथा एतदवचितैः कुसुमैरेष समुदयो निर्मितः । संख्यातरोपनीतैश्च तैरितोऽपि महता तेन भवितव्यम् । तथा हि—

सध्रीचीनां समुदय [ गिरेर्गन्ध ] मादायपूर्वं;
पुष्पाण्येतान्यहमहमिका प्राप्य पर्यग्रहीषुः।
देवी वर्ग्या प्रथमतनुपानेषुरेताः परालो,
वर्ग्याणाम्या [ ] यमवसरः स्वीयपुष्पोपहारे ॥ २६ ॥

दर्शनयोग्यदेशवर्तिनी च साम्प्रतं देवी।

( ततः प्रविशति यथानिर्दिष्टा देवी )

देवी—(स्वगतम्) अदि-चिरायिदं क्खु अम्हेहिं इमिणा पसंगेण। एत्तिओ अ समओ चिरगदाए सारसिआए। अज्जवि अज्जउत्तरसपउत्ती वि ण णिवेदिदा त्तीए अम्हाणम् [ इति तन्मार्गमवलोकयति, [ सहसा ] राजानमवलोकयन्ती ) कहं अज्जउत्तो पुप्फहारिआणं सहअरीणं मज्झे अदितं णिहिदा आएण्हि, णवमालिआ। अहो पमादो! भोई अज्जउत्त अणु च सप्पिअइ मए पदिविहाणं अणतपालं अम्हेहिं सहसा ण तक्किदो तुव णादो वि महाराओ।

[ अतिचिरायितं खलु अस्माभिरेतेन प्रसङ्गेन। एतावान् च समयः चिरगतायाः सारसिकायाः। अद्यापि आर्यपुत्र-रसप्रवृत्तिरपि न निवेदिता अस्मभ्यम् [ इति तन्मार्गमवलोकयति, [ सहसा ] राजानमलोकयन्ती ] कथम् आर्यपुत्रः पुष्पहारिकाणां सहचरीणां मध्ये ········ नवमालिका। अहो प्रमादः। ··················( ससम्भ्रममुपसृत्य ) जयतु जयतु आर्यपुत्रः विषयान्तरासङ्गेन अस्माभिस्सहसा न तर्कितस्तव नादः अपि महाराजः।

राजा—प्रिये! एतादृशमनुपरोधचेष्टितमनुमवितुमेवेष्टम्!

देवी—( स्वकण्ठादवतार्य कुसुममालया राजानमभ्यर्च्य पुष्पोपहारैरवकीर्य ) वीसमदु अज्जउत्तो। [ विश्रम्यतामार्यपुत्रः ]

राजा—देवि!

दृग्दूषिता कुसुमकेसरजै रजोभिः,
पुष्पोच्चयानुगुणया क्रियया करौ ते।
एते पदे अपि च सञ्चरणश्रमेण,
तद्युक्तमेणनयने क्षणमासितुं नः ॥ २७ ॥

( देवी स्वाभिमुखं राजानं कुसुमसंस्तृतायां भूमावुपवेश्य नवमालिकामर्थवशात् तत्पृष्ठभागवृत्तिं सम्पाद्योपविशति )

राजा—देवि ! भवदाश्रमहेतुनापि बहूपकृतमस्माकं देवीप्रयासेन। तथाहि—

श्वासेन स्फुरणं स्तनस्तबकयोर्व्यापारशैथिल्यतो,
विभ्रष्टालकयोः कपोलतलयोः स्वेदूदबिन्दुद्रुमः।
इत्येतद्द्वितयं यदप्युरभुजे प्रस्तावसाधारण,
प्रत्यग्रं दयिते तदप्यमृदितस्रग्भिर्विशिष्टन्तु तत् ॥२८॥

देवि—( लज्जामभिनीय ) हञ्जे चन्दिए ( हञ्जे चन्द्रिके ) ( उपसृत्य )

चन्द्रिका—आणवेदु देइ। [ आज्ञापयतु देवी ]

देवी—( जनान्तिकम् ) इअं णवमालिआ जहा जहा अज्जरोहिणाअणो वि कइपएहिं कुसुमेहिं अव्विअदु। [ इयं नवमालिका यथा यथा आर्य रोहिणायणोऽपि ·· ·· कुसुमैः ········ ]

चन्द्रिका—जं देवी आणवेदि त्ति। [ यद्देवी आज्ञापयति इति ]

( रोहिणायनं कुसुमैरवकीर्य राज्ञः पश्चाद्भागेनैव नवमालिकामादाय प्रस्थिता )

राजा—( देव्या नायकरत्ने नायिकान्तरप्रतिबिम्बमवलोकय, स्वगतम् साश्चर्यम् )

देव्या मया परिजने परिचीयमाने,
नेयं न तावदियमन्यतमापि काचित्।

एतद्विभूषणमणिप्रतिबिम्बिताङ्गी,
दिव्याङ्गना रतिरिव स्फुरतीति चित्रम् ।। २६ ।।
( विचिन्त्य )

विना बिम्बं तावत्प्रभवदनुबिम्बं न घटते,
न चारोपः शक्यः प्रथममगृहीते विषयिणि ।
मनोजन्यं नेदं गतिमनुविवधत्ते नयनयोः,
परिच्छेत्तुं नैव प्रभवति मनः किञ्चिदपि [मे]।। ३० ।

विदूषकः—भो वअस्स ! अणुराअविइस्सेहिं तुह्मरिसाणं यमोदोहादि अस्साणं तु ण वस्साणं दक्खिणादाणपुव्वगं पुप्कसमप्पणं च्चेअ परितोसावहणनुणएतिअमेतिं किं एदाइ आ वणे ग दुअ विक्कइस्सं किं वा धरण इत्र स्सणोएदंसइस्सं । [ भो वयस्य ! अनुरागविशेषैः पुष्पैर्युष्माहशानां ··· ················दक्षिणादान पूर्वकं पुष्पसमर्पणमिव परितोषावहं न किमेतावता वने गत्वा विक्रमिष्यें किं वा··························
एतं स·············································· ·························]

राजा—( विहस्य करादवतार्य रत्नवलयं ददाति )

विदूषकः—सोत्थि सुवस्साणं अणु व्वरअणभाअणं होहि ।
[ स्वस्ति युष्माकम् अनुवरणभाजनं भवतु ]

( इति निष्क्रान्तः )

देवी—( स्वगतम् ) सोत्थिच्चअ, एदं जं देवेण अदि अदिट्ठा णवमालिआ णिक्कंता । [ स्वस्तिचरम् एतद्यत् देवेनातितरां दृष्टा नवमालिका निष्क्रान्ता ]

राजा—( स्वगतम ) दर्शनं खलु संवृत्तं, रत्नभाजनत्वं पुनरासादनीयम् ।

( नेपथ्ये )

[······]हरिता सहैव सहसा कान्ताजनो रज्यते,
जम्भारेः ककुभा समं मलिनतामायाति कोकीकुलम् ।

साद्धं तारकमालया च कुमुदश्रेणी समुद्भिद्यते
साकं लोकविलोचनैर्मुकुलिता नालीकिनी जायते ।३१।

अपि च—

इयं चरम भूमिभृच्छिखरपक्वणापक्वण-
प्रसक्तकुकवाकुभिर्विहितकाकुभिर्व्याकुलैः ।
रथाङ्गमिथुनैः पृथग्वरुण दीर्घिकामाश्रितै—
ररुद्धकरणं वहद (?) रुणमण्डली वीक्षते ।। ३२ ।।

राजा—( आकर्ण्य ) देवि ! सन्ध्यासमयः संवृत्तस्तदुत्तिष्ठामः ।

देवी—जं अज्जउत्तो आणवेदि । [ यदार्यपुत्रः आज्ञापयति ]

( सर्वे उत्तिष्ठन्ति )

( सारसिका दीपिकाहस्ताभिरन्तःपुरिकाभिः सह प्रविश्य )

सारसिका—जेदु देवो । ( जयतु देवः )

देवी—( परिक्रामन्ती सक्रोधम् ) हंजे सारसिए अज्जउत्तस्स पउत्तिग्गहणस्स तहिं अणुप्पसिदाएणिंह परानुत्तासि ।

[ हञ्जे सारसिके ! आर्यपुत्रस्य प्रवृत्तिग्रहणाय तदानुप्रेषिता इदानीं परावृत्तासि ]

सारसिका—( भयमभिनीय ) देई वडविहासुएदस्स तरुवीहिआसु-र कु····व अवणं ते ण मग्गेण अअं गदा । जत्थ सिन्दुवारगहपते अ महाराओ आअदोत्ति मग्गाभेदो ए दस्स अवरज्जइ ।[ देवि, एतस्य तरुवीथिकासु मार्गेणाहं गता । यत्र सिन्धुवार ···· महाराज आगत इति मार्गभेद एतस्यापराध्यति ···]

राजा—( स्वगतम् ) साधु सारसिके साधु । महत्संवरणकौशलं दर्शितम् नूनमग्रेऽप्यनया स्वनयोपयोगो दर्शनीयः ।

देवी—अह चिरादो कहं पडिणिउत्तासि ? ( अथ चिरात् कथं प्रतिनिवृत्तासि ? )

राजा—( स्वगतम् ) अथात्र किं प्रतिपाद्यते ?

सारसिका—इदो अहिमुहं आअच्छंतीए इदो णिगच्छंती पिअसही चन्दिआ मग्गमज्झे दिट्ठा। [ इतोऽभिमुखमागच्छन्त्या मया इतः निर्गच्छन्ती प्रियसखी चन्द्रिका मार्गमध्ये दृष्टा। ]

देवी—( स्वगतम् ) हद्धी माए णवमालिआए णाणेहे अडेत्त सारतीए तु तं णववणवुत्तंतं महाराअस्स आअमणादो अणंतरं सव्वं समाअस्सअंतीए अइकन्तो केत्तिओ, वि समओ।

[ हाधिक्! ......नवमालिका..........................................

वनवृत्तान्तं महाराजस्य आगमनादनतरं सर्वं समासादयन्त्याः अतिक्रान्तः कियानपि समयः। ]

राजा—( स्वगतम् ) दिष्ट्या चन्द्रिकया नीयमानायाः कस्याश्चित् प्रतिबिम्बमत्रानुभूतम्। तद्दर्शनायानुत्तरवृत्तमप्यनया ज्ञातव्यम्। ( प्रकाशम् ) देवि! न स्थानमिदं कोपस्य।

देवी—( स्वगतम् ) णिवधेण पुच्छिज्जन्तो प्पसंगोदो तीए वुत्तंत्तं पआसेइ। ता णवमालिआवुत्तन्तसंवरणमेत्तं बहुमदं अम्हाणम्। ( प्रकाशम् ) इमादो अणंतरं ण एव्वं कारिस्सदि। [ (स्वगतम्)...... पृच्छ्यमाना प्रसङ्गतस्तस्याः वृत्तान्तं प्रकाशयेत्। तन्नवमालिकावृत्तान्तसंवरणमात्रं बहुमतमस्माकम् ( प्रकाशम् ) अस्मादनन्तरं नैनं करिष्यसि। ]

सारसिका—जं देवो आणवेदी। (यद्देवो आज्ञापयति )

राजा—अमुनाप्रसङ्गेन निष्कान्त आरामः। ततः प्रविश त्वमन्तःपुरं देवि!। वयमपि यथानुरूपं सम्भावयामः।

( इति निष्क्रान्ताः सर्वे )

प्रथमोङ्कः



# नवमालिका-(नाटिका)

## द्वितीयोऽङ्कः

(ततः प्रविशति सारसिका)

सारसिका—( संस्कृतमाश्रित्य )

पश्चात्सन्निहितप्रयाणसमये हा हान्तरालज्वलन्-
माणिक्ये नवमालिकाप्रतिफलं देवस्य सम्पश्यतः।
तत्र स्यूतमिव प्रभूतविसरत्तद्दीधितिप्रग्रहै-
र्वैमुख्यं विषयान्तरेषु करणं सम्प्राप्तमाभ्यन्तरम् ॥१॥

अवि अ- (अपि च)

एव्वं विहाद्दे व्व········देवेण लद्धं णोमालिआए।
संदस्सणं सिद्धमआणमाणा देइप्पमोअं परमं अवत्ता ॥२॥
[ एवं विहाद्दे व ····· देवेन लब्धं नवमालिकायाः। ]
सन्दर्शनं सिद्ध··· ·····देवी प्रमोहं परममवाप्ता ॥

( अग्रतोऽवलोक्य। ) सहि चंदिए, किं एव्वं तुरदासि। जेण पुरोवट्टिणिं वि मं ण पेक्खेसि। [सखि चन्द्रिके, किमेवं त्वरितासि। येन पुरोवर्तिनीमपि मां न पश्यसि ]

चन्द्रिका-(प्रविश्य) सहि, सुणि अदु। एव······ ··उववणादो अंदेउरंपइट्ठमेत्ता देवीए उत्तं-हंजे, पुच्छसु णवमालिअं जं तुए अज्ज विदित अला परिणिट्ठिआएविण्णाणसंदसणत्थं मए प्पहिदं अत्तणो पडिछन्दअं आलिहिअ मे समप्पिअं। मए वि पुप्फगहणसत्तचित्ताए कस्सिं वि आरामरुक्खअले णिक्खिअ परावुत्तिसमए एदं गहिअ गम्मिस्सम्मित्ति तुमं आणत्ता। ता कहिं दाणिं चित्तफलअं अत्थित्ति? [सखि श्रृणु। एव ·······उपवनात् अन्तःपुरं प्रतिष्ठापयन्त्या देव्या उक्तम्-हञ्जे, पृच्छ नवमालिकाम्। यत् त्वया अद्य विदित (क) ला-परिनिष्ठितया विज्ञानसन्दर्शनार्थं मया प्रहितम् आत्मनो प्रतिच्छन्दकम् आलिख्य मह्यं समर्पितम्। मयापि पुष्पग्रहणव्यग्रचित्तया

कस्मिन्नपि आरामवृक्षतले निक्षिप्य परावर्तनसमये एतद् गृहीत्वा गमिष्यामीति त्वमाज्ञप्ता। तत्कुत्रेदानीं चित्रफलकमस्तीति ?]
सारसिका—पच्छा आअदेण महाराएण मा दिट्ठं भवे ति्त देवीए अहिप्पाओ। तदो ?

[पश्चादागतेन महाराजेन मा दृष्टं भवेदिति देव्या अभिप्रायः। ततः ?]
चन्द्रिका—तदो णवमालिआए संदिट्ठं आअमणसमए देइणिओएण इदो तदो पडिसिद्धगमणाए चंदिआए अप्प समादि मग्गमेत्तेण णिज्जुमाणाए म······परिदंआणेमुन्ति [ततो नवमालिकया सन्दिष्टम् आगमन समये देवीनियोगेन इतस्ततः प्रतिषिद्धगमनाया चन्द्रिकाया ······मार्गमात्रेण नियुज्यमानाया·········· ]
सारसिका—दिट्ठिआ णवमालिआए दोसो परिभट्ठो तदो
[ दिष्टया नवमालिकाया दोषः परिभष्टः ततः ]

चन्द्रिका—एव्वं सुणिअ देवीए आणत्तं-णिउणं वेअ णवमालिअं गहिअत्तं चित्तफलअं अस्सेसीअदुत्ति। तेण मे संभमविसेसो।
[एवं श्रुत्वा देव्या आज्ञप्तम्-निपुणमेव नवमालिकां गृहीत्वा तच्चित्रफलकमस्य······इति। तेन मे सम्भ्रमविशेषः]
सारसिका—जइ अस्सि ओसरेम महाराओ वि कहं वितत्थ संणिहिदो भवे तदो अदिरमणिज्जं अणाआसवज्जत्तं सं विहाणअं भवे।
(यद्यस्मिन्नवसरे महाराजोऽपि कथमपि तत्र सन्निहितो भवेत्तदातिरमणीयम् अनायास·····संविधानकं भवेत्।)
चन्द्रिका—किं महाराअस्स दिट्ठिगोअरतणं गदा णवमालिआ ?
[ किं महाराजस्य दृष्टिगोचरत्वं गता नवमालिका। ]

सारसिका—अह इम ('पश्चात्सन्निहिते प्रयाणसमये' इत्यादि (२।१) पठति) अह महाराओ णवमालिआए णेत्तपहिओ संवुत्तो न वा ? ]
[अथ महाराजः नवमालिकाया नेत्रपथिकः संवृत्तो न वा ?]
चन्द्रिका—बाढ सहि पुच्छ विस्मादं वि अस्स णसंभरसि। कहिअं क्खु मए णवमालिआ सहिदा ए तुज्झ तीए क्खु णिओअ वसेण देई सण्णिहिद देसादो इमेअ ओसारिअ। अस्समअमत तरु गुल्मंतरीआ

भविअ वाहोहरुभिअ गलप्पडिरुद्ध दीसणीसासवेविवरप्पहरमंडलाए णेत्तंबुविंदु परिओल्लिअपट्ठुभाआ दिट्ठी तदोच्चिय अणुप्पहिदा। कहिं भवो दुण एसोत्तत्तरस्सपत्यावो। ताअहं वि जहादिट्ठं अणुठिस्सं। [ बाढं सखि ........................ अस्य न संहरसि। कथितं खलु मया नवमालिकासहिताया तव तस्याः खलु नियोगवशेन देवीसन्निहितदेशात् इमाम् ....... अपसारय........... । ................ तरुगुल्मान्तरित.... भूत्वा.................. मय गलत प्रतिरुद्ध-दृष्टिनिश्वास ................................. मण्डलाया नेत्राम्बुबिन्दु परि ................ भावा दृष्टिस्तदोत्थायानुप्रहिता । कथं पुनः प्रतीमः (प्रत्येम )। तदहमपि यथा दिष्ट मनुष्ठास्यामि ।.] (इति निष्क्रान्ता)

सारसिका—(स्वगतम्) कहं विअणअत्तसिद्धं अहिआरसमअं महाराअस्स णिवेदेमि (विलोक्य) कहं महाराओ रोहिणाअणेण सहिदो दीसदि। ता एत्थ ठ्ठिदा एव्व उपसप्पणाओसरं पडिपाल इस्सं।

[कथं...मात्रसिद्धमभिसारसमयं महाराजाय निवेदयामि (विलोक्य) कथं महाराजः रोहिणायनेन सहितः दृश्यते। तदत्र स्थिता एवोपसर्पणावसरं प्रतिपालयामि।]

(ततः प्रविशति राजा विदूषकश्च)

राजा —(सौत्सुक्यं तामनुसन्धाय)

शीतांशोरपरा तनूरिव मुखं स्वस्यानु कूल्यायितं।
वक्षोजौ तपनीयपद्ममुकुलं तस्या विधातुं क्षमौ ॥
ऊरुद्वन्द्वमकाण्ड एव कदली काण्डस्य पाण्डित्यहृत्
सा बालाधिपतेरतेरपि रतेरालम्बनत्वोचिता ॥३॥

विदूषकः—भो वअस्स, क्खणमेत्तं वि देईविरहिदो किं एव्वं उत्तम्मसि। [ भो वयस्य, क्षणमात्रमपि देवीविरहितः किमेवमुत्ताम्यसि ? ]

सारसिका—अहो बहुअस्स उज्झअत्तणं जेण णोमालिआणिमित्तअं ओम्मादं देईणिमित्तअं त्ति तक्कोदि [अहो बटुकस्यौद्धत्यं येन नवमालिकानिमित्तकमुन्मादं देवी निमित्तकमिति तर्कयति ।)

विदूषकः—ता पेच्छ एदं देईए चंदलेहाए पडिच्छन्दअं। [तत्प्रेक्षस्वेदं देव्याश्चन्द्रलेखायाः प्रतिच्छन्दकम् ] ( इति स्वकक्षादाकृष्य स्वहस्तेन फलकोऽर्धमपि द्विधा पिधाय दर्शयति )

सारसिका— ( विलोक्य ) महन्तोक्खु ब्रह्मणावअस्सस्स मरिमोओ जेण णोमालिआए पडिच्छंदअं देइए ति पडिवुज्जइ। [ महान् खलु ब्राह्मणवयस्यस्य परिमोहो येन नवमालिकायाः प्रतिच्छन्दकं देव्या इति प्रतिपद्यते ]

राजा—(स्वगतम्) हन्त भ्रममूलकोऽपि प्रयत्नोऽस्यास्मासु फलवानेव संवृत्तः। तथा हि—

सा वेणी करवालिकेव सुमनोबाणस्य जेतुं वनं
तद्वक्त्रं प्रतिवादितामुपगतं राकासुधादीधितेः।
सैव भ्रूस्मरचापवीरुदिव तौ वक्षोरुहौ केलतो
केलीकन्दुकसुन्दरौ तडिदिव प्रोद्भासुरा सा तनुः ॥४॥

(प्रकाशम्) वयस्य, अथ किमिदं द्वितीयार्थे ?

विदूषकः—भो वअस्स, ण दंसइस्सं। इदो वि अहिअ परं तुए अस्सेआ आसणिज्जा। [भोवयस्य ! न दर्शयिष्यामि। इतोऽपि अधिक… परंत्वया आश्वासनिया ]

सारसिका—हंत दिढ़अरं मुद्धत्तणं जेण हिअआसा असारणं णआसिअ अद्धंतरं गोवेई। [हन्त दृढ़तरं मुग्धत्व येन हृदयाशापसारणं………………… अर्द्धांतरं गोपयति]

राजा-(तत्करादाच्छिद्य दृष्ट्वा स्वगतम्) कथं देवी परिचारिकेयम् (प्रकाशम्) वयस्य कथय के ऐते ?

विदूषकः- भो ! जा मए अप्पणा दस्सिदा सा देइ जा तुए बलक्कारेण दिट्ठा सा देइए का वि परिआरिआ । [भोः या मयात्मना दर्शिता सा देवी या त्वया बलात्कारेण दृष्टा सा देव्याः कापि परिचारिका ]

राजा-(स्वगतम्) कथं परस्परेऽस्मिन् परस्पराभेदभ्रमो मुग्धस्य ।

सारसिका-(स्वगतम् प्रत्यभिज्ञाय) तं एदं चित्तफलअं इमस्स अण्णेसणे देईए वि अहो अहिणिएसो । [तदेतच्चित्रफलकमस्यान्वेषणे देव्या अप्यहोऽभिनिवेशः ]

राजा-वयस्य, देव्याः परिचारिकेति कथं जानासि ?

विदूषकः-तहिं क्खु तुह पुट्ठदो क्खणं ठिदा आसी [तदानीं खलु तव पृष्ठतः क्षणं स्थितासीत् ]

राजा-(स्वगतम्) उपपद्यते हि तथाविधानान्मदभिमुखवृत्ति देवीभूषणे प्रतिफलनम् (प्रकाशम्) अथेदानीमस्य चित्रफलकस्य कुतोऽधिगमः ?

विदूषकः-तहिं खु । [तदानीं खलु ]

देइ अग्गे णअण चलअज्जं तुए मज्ज दिस्सं
गेहे गन्तुं करअलग अं नव्वहं तोमपव्वम् ।
आगच्छन्दो गहिअगहणं सिंधुवारस्स वीही
तीए एक्खथ्थ लविणिहिदं दिट्ठिवंतो ह्विएदं ॥५॥

[देवी अग्रे नयन ··········· त्वया ················ दृष्टम्
गृहे गन्तुं करतलगतं ······································· ।
आगच्छन्तं गृहीत्वा गहनं सिन्धुवारस्य वीथी
तया अत्र स्थल विनिहितं दृष्टवानस्मि एतम् ॥]

सारसिका- (स्वगतम्) एव्वं सव्वं वि उप्पविणं(?) [ एतत् सर्वमपि ......................................................................... ]

विदूषकः-तदो मए कहिं वि पिअवअस्सस्स उअज्जोओ इमिणा भावेदित्तिएदं भणिदं-अदिट्ठ तुव्वेकणारअणोरज्जंतमाणसेन तुए असेसइएत्तं उपरोहरिज्जामाभवेमतिअवरो भाओ मए समच्छा दिओ आसी। [ ततो मया कथमपि प्रियवयस्य स्योपाध्यायः अनेन भावयति इति इदं भणितः- अदृष्ट ............ अनुरज्यमानमानसेन त्वया अशेष ........................ इति, अपरो भवो मया समाच्छादित आसीत। ]

(नेपथ्ये)

अज्ज रोहिणाअण ! तदो अप्पदीव ते विस्माणम। [आर्य रौहिणायन ! तदा प्रभृत्येवते विस्मरणम ]

विदूषकः--किं एदम ? [ किमेतत् ]

राजा- वयस्य, तस्यां देवीभ्रमो देव्योश्च तद्भ्रमस्ते संवृत्तः।

विदूषकः--भो एदस्स दुवे इत्थ ओ आलिलिहिदिआ जाणामि अ णोस्स विद्यमे (?) तुण विसेस दंसण विरोहिणा जरा अवरज्जइ। [ भो वयस्य, द्वे अत्र आलिखिते। जानामि च तव विशेषदर्शन-विरोधिना ···· अपरज्यते। ]

राजा—न किंचिदेतावता हीयते।

व्यक्तिद्वयं लिखितमस्ति तदेव वस्तु
गत्या तदेतदुपनिनिय्य यद्धिया त्वम्।
भ्रामत्यपि त्वयि भवत्यभियोगभेदा-
दीषत्करो यमनयोरपरैर्विवेकः ॥६॥

अहो कौशलविशेषः !

प्रत्यग्रोद्गत यौवनोल्लसितवद्वक्षोजकोशद्वयं,
विस्तारस्य भविष्यतोऽप्यभिमुखं विन्यासनोऽभ्यासने।
अत्यन्तानुपलक्ष्यकामविकृतेर्दृष्टिस्तिरश्चीनतां,
बिभ्राणापि विधीयमान सरलीभावा विभातिह्रिया।७।

( उभयमप्यनुरूप्य स्वगतम् )

देव्यामत्र च दिव्यसुभ्रु वि पदोऽप्यापाततो भासते,
रूपं सातिशयं दृशौ वर्मयितुं सजात्यमेवोद्वहत् ।
तस्यामुत्तरवृत्तिना निजसजातीयान्वयेनोज्झितं
तेनानुक्षणभाविनानुविहितस्वारस्यमस्यां पुनः ॥८॥

सारसिका—दिट्ठा पि असिहिए णवमालिआए गुणेहिं लद्धो एदस्स हिअए प्पवेसओ । (दिष्टया प्रिय संख्याः नवमालिकायाः गुणैर्लब्धः अस्य हृदये प्रवेशः । ]

विदूषकः—अस्स ए णिंह चिअ इमिए तुवरिद दयारानुवं धत्तो हिअअंसंवुत्तं । [ ...... इदानीं.........एतस्या त्वरिततर हृदयं संवृत्तम । ]

राजा—किमुच्यते इदानीमिति—

मुक्तावलीलोहितकान्तराले देव्यास्तदानीमनुबिम्बतायाम्
तस्यां समासज्य दृशौ मदीये नेदीयसी तां परितः प्रतीतः ९।

विदूषकः—कहं तुए ण इमं वि सा च्चेअ पच्चक्खी किदा । [कथं त्वया नेयमपि सा चैव प्रत्यक्षीकृता ]

राजा -ततश्चारभ्य

प्रतीकाः प्रत्येकं विदधति विदाघातप इव,
प्रवेशं चक्षुर्मे विषमिव परं वेत्ति विषयम् ।
परिच्छेतुं नैव प्रभवति मति र्वस्तु किमिति,
प्रवाहस्तन्मात्रं परिकलयतीह प्रतिपदाम् ॥१०॥

विदूषकः—ण जाणी अदि पिअवस्सो वि तीए आलाइओ ण वेत्ति । [ न ज्ञायते प्रियवयस्योऽपि तया लोकितो न वेति ]

राजा—न खलु परमात्मवृत्तयो गुणाः परप्रत्यक्षी भवितुमर्हन्ति ।

(सारसिका प्रविश्य)

सारसिका—जेदु महाराओ.... ..........हिं पिअसहीए चंदिआए...... ..नहिं देवर आसा दो अवहरिज्जंतीए देअदंसणप्पउत्ताए वि लक्खणं संट्ठाणं

तंसं आवलणेव अंसकुसु अंसत्थलप्पंसदो
वि''ओसिहिणाण पेल्लववसा आकुंचिअं कंचुअं।
मूलेवा उमुअस्स तस्स णअण पल्लेरणीलुप्पल-
पुटठोए तुणएक्क भाअणि अदावाहें हि मुत्ताली।११।

[जयतु महाराजः

विदूषकः—(सभयं जनान्तिकम्) वअस्स, पच्छादिअदु चित्तफलअं देईए दीअ संभाअणं क्खु। [वयस्य, प्रच्छादय चित्रफलकम्। देव्या इव सम्भाषणं खलु।]

राजा—एषाधिगताभिज्ञा, किमतः परं गोपयितव्यम्। किमेतदपि न ज्ञायते--रात्रचरपरि लुण्ठिते वेश्मनि किं यामिक जागरणेति।

सारसिका—अज्ज उत्ते हिंसआसंतु मणाइस्सं। [आर्यपुत्रे···· ··त्वां नयिष्ये]

विदूषक—कस्स णिमित्ते? [कस्मिन् निमित्ते]

सारसिका—एव्वं विहडनं क्खु अवराडो। [एवं विघटनं खलु अपराधः।

विदूषकः—अप्पवादो एसो [अपवादः एषः] 'क्वचिन्निषादी तनयं ऽसूते'।

कश्चिन्निषादस्तु कषायपायीति।

जं पिअवअस्सो अवरज्जइ। अहं दण्डिज्जामि [यत्र प्रिय वयस्यो-ऽपरज्यते। (त) तम अहं दण्डयिष्यामि।]

राजा—वयस्य, मा भैषीः। सारसिके, यदि जानासि तत्तादुत्तर मप्यावेदय तदीयं वृत्तान्तम्।

सारसिका—जं देवो आणवेदी। तहिं क्खु आरामाहि मुहं गछंदीए मए वंदिआए समं ऐती णवमालिआ सप्पडिहासं मणिदा-सहि, किंत्ति एण्हिं विअ एरिसी दे अवत्था संवुत्ता? [यद्देवः आज्ञापयति। तदानीं खलु आरामाभिमुखं गच्छन्त्या मया वन्दिन्या सहायान्ती नवमालिका सपरिहासं भणिता-सखि, किमितीदानीमपि चेदृशी ते वस्था संवृत्ता?]

णयणाहि गलंति वाप्पधारा, सुआअन्ति णवा प्पसूणमाला।
अवि णीससिआइका कराइं विवशा अवि एसु ण फ्फुरंति।१२।

[नयनेभ्यः गलन्ति बाष्पधाराः
.........नवा प्रसूनमाला।
अपि निश्वसितानि का
विवशा अपि एषु न स्फुरन्ति ॥]

राजाः—ततस्ततः

सारसिका—तदो तीए। [ततस्तया]

अकरुणदिठ्ठं माआमं पछंती तए उत्तम्।
सहि किं गहिअस्सं मं मंदभाइणि वि तुमं एव्व दूनेसि।१३।

[अकरुणं पश्यन्ती मां पृच्छन्तीं तया उक्तम्।
सखि किं गृहोष्यसि मां मन्दभागिनीमपि त्वमेवं दूनयंती॥]

राजा—गरीयानयं प्रणयनिर्वेदः। ततः?

सारसिका—तदो मए उत्तं-सहि, रमणिज्जपरिणामेण क्खु इमिणा उवक्कमेण होदव्वं। मा एव्वं अदि काअदा होहि। [ततो मयोक्तम्-सखि, रमणीयपरिणामेन खल्वनेनोपक्रमेण भवितव्यम। मैवमतिकातरा भव।]

राजा—(स्वगतम)

यदि वहति ततज्यं कार्मुकं पुष्पधन्वा,
यदि वन-परिवृत्तं चेतसश्चञ्चलत्वम्।
अपि यदि विषयाणां सा वशीकार-शक्ति-
स्तदिह न गणनीयं पाकवैरस्यमर्थे ॥१४॥

(प्रकाशम) ततस्ततः

सारसिका—तदो.........अक्खरंतीए उत्तम-सहि, कहिंहं मारिसा रंगं आसवो [ततः .... ... ... ...अक्षरन्त्या उक्तम्-सखि! कस्मिन्नहं .. ... ... ... ... .... ... ... ... ...]

धीरेणज्जइ आससिज्जइ समालोएणनंसेगअं
अत्थिज्जंति कहं अहं विअ परहीणा सहोओ हला ।
अप्पछंदपउत्तिअं अहिअअं णोत्तारए तुंभिआ
लज्जावज्जिअ विह्मदोअदि कहं आणद्दणेहे जणे ॥१५॥
[ धैर्येण यदि आसाद्यते समालोकेन ....गतं
अस्ति ....कथम् अहमिव पराधीना सख्यः सखि, ।
अल्पछन्दःप्रवृत्तिकम् अभिमतं नोत्तारयेत्तुम्बिका
लज्जावर्जितं विस्मयते कथम आनद्धस्नेहे जने ॥ ]

राजा—अभिमतः खलु प्रणयोपालम्भस्य भाजनतां वयं नीताः

सारसिका—(संस्कृतमाश्रित्य), देव ! किं बहुना विज्ञापितेन—

सा कामास्त्रेषु-घातान् कलयति विशिखाभ्यासपाङ्वालिकेव
श्वासावेगानि[शोता]निल इव कुचयोः कोकयोः कङ्ककारी ।
अन्तर्दाहो विवस्वानसमशरदहत् केतकोम्लान हेतु-
र्मोहोऽप्याहत्य राहूग्रह इव सहसा चित्तचन्द्रं दुनोति ॥१६॥

विदूषकः-भो वअस्स, कहं खणमेत्तदंसणेण एत्तिअं भूइं आरूढो से अणुराओ ? [भो वयस्य' कथं क्षणमात्रदर्शनेज एतावतीं भूमिमारूढोऽस्याः अनुरागः ? ]

राजा—वयस्य, नेदमावृत्तिसाध्यम । तथाहि

आलोकमात्रतो यदि नोल्लासस्तर्हि निष्फलोऽभ्यासः ।
कोरकितेन्दोरुदये निशामपि किं पद्मिनो हन्ति ॥१७॥

मम त्विदानीम्-

भुजावीरुद्द्वन्द्वो मधुरतरबिम्बाधरसुधा,
रसास्वादश्चास्या भवति बहु तावदव्यवहितः ।
मिथोभावा कूतोऽस्ति नयनान्तव्यतिकरा,
भवेदालापानामभिमिलनमित्पुण्यसुलभम ॥१८॥

सारसिका—जइ एव्वं महाराअस्स तहिं अहिणिवेसो ता अस्सिं जुज्जते उववणं आगमीअदुं । [ यद्येवं महाराजस्य तत्राभिनिवेशो वदस्मिन युज्यते उपवनमागन्तुम । ]

विदूषकः-एण्हिं क्खु एदस्स कीरिसो अहिसारो ? [इदानीं खल्वेतस्य कीदृशो ऽभिसारः ?]

सारसिका—णं अविदिअ पुव्वापरा वि विअहिक्खि वंति। [नन्वविदित्वा पूर्वापरावपि ·········]

राजा—सारसिका एतत् कथ्यताम्।

सारसिका—सा क्खु एदं चित्तफलअं असेसिदुं देइए चंदिआ सहिदा तहिं चचे अ एण्हिं अणुप्पेसिदा। [सा खल्वेतच्चित्रफलकमासादितुं देव्या चन्द्रिकासहिता तदानीमेव अत्रानुप्रेषिता।]

राजा-हन्त! देवीसम्बन्धीदम् अथ देव्याः कुतोऽस्याधिगमः?

सारसिका--देअस्स हिअआणुबंधि सो त्रिदोच्चैव जणादो। [देवस्य हृदयानुबन्धि तदिति तदैव ज्ञातम्।]

राजा-युज्जा एव आकृत्यातिशयानुरूप ऽतिशयः। तदलं विलम्बेन। (उत्थाय)

संवित्तिर्न मिथोऽनुरागविषया देव्या भवत्पादयोः
बालापि स्वयमेव सा किल तया कार्यादनुप्रेषिता।
संवृत्ता रजनी च यान्धतमसैर्संन्धीयमाना दिशः
स्यादेवोपहितः फलेन कलये सोऽयं श्रमप्रक्रमः ॥१६॥

(इति निष्क्रान्ताः सर्वे)

द्वितीयोऽङ्कः।



## नवमालिका-(नाटिका)

### अथतृतीयोऽङ्कः

(ततः प्रविशति चन्द्रिका)

चन्द्रिका—अम्महे उववणं पविट्ठम्हि (पश्चाद्विलोक्य) कहिं पिअसहीं णवमालिअं विलंइस्सं (संस्कृतमाश्रित्य) [अहो! उपवनं प्रविष्टास्मि। कुत्र प्रियसखी नवमालिकाम् अपि लम्भयिष्यामि] इयहि—

औत्सुक्येनान्तरार्धाद्विश्वकलिततया शून्यमेवोल्लिखन्ती
बाह्यानामिन्द्रियाणां प्रति निजविषयं वृत्तिजातोपरोधात्।
न स्वातन्त्र्येण मार्गं नयति विषयितां नो पदं पूर्वदेशात्
उत्क्षिप्य पूर्वदेशे क्षिपति न च मनाङ् मन्मथावेशदोषात्।१।

(नेपथ्ये)

सहि, दंसेहि ता पदेसं। [सखि, दर्शय तत्प्रदेशम्]

प्रवेशकः।

(ततः प्रविशति नवमालिका)

नवमालिका—(स्वगतम्)

अस्माणि ओ अमअदूसह आन्तराआ
रोहे विपाविअ कहं विजणस्स तस्स।
संदस्सणं अवि सउस्सुहमास्सहमास्समाहे (?)
अप्पावि मेण पडिहाइ कुदो म देसे ॥२॥

[अस्मन्नियोगमयदुःसहान्तराया
रोधेऽपि प्राप्य कथमपि जनस्य तस्य।
सन्दर्शनम् अपि.... .... .... .... .... .... ....
आत्मापि मे नप्रतिभाति कुतः........स देशे]

(प्रकाशम्) सहि, दाणि करिस्सं पदेसे वट्टाओ?
[सखि, इदानीं कस्मिन्प्रदेशे वर्तावहे]

चन्द्रिका—सखि, अम्हाणं सारसिआ मिलिदा । [सखि, अस्माकं सारसिका मिलिता ]

(नवमालिका सास्रं राजदर्शनदेशाभिमुखं पश्यन्ती स्थिता)

चन्द्रिका—अहोप्पमाओ । इदो क्खु अगादो दुक्खा रं रोदुं भइस्सदि । (विलोक्य) कहं सारसिआ रोहिणाअणमेत्तसहाओ महाराओ चतुरे हिं तमालगुम्मेहिं ववहिदो चिट्ठदि । ता जाणे महं तेण कालक्खेवेण होदव्वं ता किं उवसप्पामि । अहवा ण जुत्तं उवसप्पिदुं । इमाए अणुराअ वीसद्धाए·······ससअण उवसप्पे ।

[अहो ! प्रमादः । इतः खलु···· ···· ···· ····नेतुं भविष्यति (विलोक्य) कथं सारसिकारोहिणायन-मात्रसहायो महाराजः ··················तमालगुल्मे व्यवहितस्तिष्ठति । तत् जाने महता कालक्षेपेण भवितव्यम तत् किं उपसर्पामि ? अथवा न युक्तमुपसर्पितुम् । अनुराग···· ···· ···· ···· ···· ]

( ततः प्रविशति यथा निर्दिष्टो राजा )

राजा—वयस्य, अनया विदित—प्रवेशैरेवास्माभिरित ···· ···· ···· ···· ····रहस्य (रहः) विलसि—तान्युपभवितव्यानि । तदलं त तरलया ।

विदूषकः—तुम्हाणं से आप्पसाहणे परिचिदा ण ए परिसप्पिआएसा । [युष्माकं सेवाप्रसाधनपरिचिता परिसर्पिता एषा ]

राजाः—(नवमालिकामवलोक्य । साश्चर्यम्)

प्रालेयांशोः कलायामुपहतिमतये दृश्यतावास्यताया
मालानां कौसुमीनामपि मृदुतरताव्यत्यय--प्रत्ययाय ।
अप्रामाण्याय वाण्यास्त्रिदिवमृगदृशां रूपवत्तापरायाः
विस्तारायाद्भुतानामिह भुवि भवने भासते भामिनीयम् ।३।

अपिच—

पीयूषांशुकलेव संश्रितवती जीमूतलिप्तं दिवं
स्वर्णस्य प्रतिमेव संस्कृतदृशामुल्लेखपूर्वक्ष ·· ।

आसत्तिप्रतिरेकतः प्रियजनस्यायास्यमाना स्मर-
व्यापारेण रुचा न ... वतिशयं धत्तेऽभिभूतं मनाक् ।।४।।

सारसिका—देअ, जहा चंदिआए अ.......बद्धा वि
प.................अग्गदो..........लदि तहा जाणामि—

तस्सिं देसे दरिसणसुहं तोअ दे अस्स लद्धं
तत्तो उद्धं वअणकमलं उद्दहंती अपुव्वं
तत्ताए तो णअणसलिलप्पसव्वेहि वक्खो
वोलवं वि प्पउरसमणाणुच्चबंधेइ कि वि ।।५।।

[देव यथा चन्द्रिकाया.... .... .... .... ....
तथा जानामि—
तस्मिन् देशे दर्शनसुखं त देशस्य लब्धं
तत ऊर्ध्वं वदनकमलमुन्नयन्ती (?) अपूर्वम् ।
तत्तस्या नयनसलिल प्रस्रव.... .... ....
आलम्ब्यापि प्रवरसमनातुच्चबध्नाति किमपि ।।५।। ]

राजा—सारसिके, नन्वभिनिविश्य पश्यामि ।

कदम्बमुकुलोपमा नयनवारिणो विप्रुषः
कपोलतलमेलनाद् बहलयन्ति कौतूहलम् ।
बलाहकपथाद्बलादिव पलायितास्तारका
मृगाङ्कविरहासहा निपतयालवस्तूद्गमात् ।।६।।

अपिच—

किङ्कार्यं केशवेशे सति सितचमरावेशनक्लेशलेशैः
वक्त्र चाक्षुण्णकान्तौ कुवलयमलक नातने माननेन्दोः (?)
नात्योजस्कावुरोजद्वितयगिरिपुरो वारणेन्द्रस्य कुम्भौ
शम्पा प्रत्यक्षसम्पादनमपि विफलं कान्तिरेकान्तिकी चेत् ।७।

चन्द्रिका—(स्वगतम्) ता इमी (मा) ए सीहि लइ (खु) ण
(प्रकाशम) सहि, जइ परिस्संतासि ता मलआणिल सेवणेण अ खेदं
अवणेहि । [तत् एतस्याः सिद्धिलक्षणम । (प्रकाशम्) सखि, यदि

परिश्रान्तासि तन्मलयानिलसेवनेन खेदमपनय ।]

नवमालिका—(अनुसन्धाय । संस्कृतमाश्रित्य) सखि, यथार्थमात्थ

प्रतिक्षणममर्षणस्वचरणप्रणम्रप्रिया-
वधोरणविचक्षणप्रणयिनां मनःप्रेरणः ।
विभीषणवधूगणश्रवणभूषणश्रीचर--
च्छदाम्रवणकर्षणः सखि समीरणः प्रोल्वणः ॥८॥

राजा— (आकर्ण्य)

अन्वीयमासि गिरमाङ्गिरसस्य रस्या-
गङ्गातरङ्गहृदयङ्गमभङ्गुराणि ।
स्वारस्यतः पदनिबन्धनबन्धुराणि
काव्यानि भव्यधिय एव विभावयन्ति ॥९॥

नवमालिका—सहि, तहवि एण्हि । [सखि, तथापीदानीम्]

णिदाहदिशवोव्वण व्ववकअ व अव्वे फुडं
वउप्फरिदउप्फआ उदवहंतरि वट्ठिअं ।
प्पसूणमहुविंदुहिं सिसिर ए विचित्तेणिले
मणं परिमिसंतर·········हलअंगअट्ठं जइ ॥१०॥

[निदाघ···· .... .... .... .... ····स्फुटं
वपुःस्फुरितउ···· .... ····उदवह···· ····स्थितम् ।
प्रसूनमधुबिन्दुभिः शिशिरिते विचित्रेऽनिले
मनः परि···· .... .... .... ····यदि ॥१०॥]

राजा—अहो ! अननुरूपः सम्बन्धः ।तथा हि--

इयं नवपल्लवोपकरणप्रहारासहा
कलेवरलता सुधानिधि··· ······ ।
अयं ह्यसमसुप्तिमत्समयमारुतप्रज्वल--
द्विशृङ्खलदमूनसंविषदमूलयन्मन्मथः ॥११॥

चन्द्रिका—अवि समरिओ सो प्पदेसो ? [अपि स्मृतः स प्रदेशः]

राजा—(स्वगतम्) किन्तेन स्मृतेन विस्मृतेन वा । अन्वेषणीयं हि अस्माकमेव हस्तवृत्तिभूतम् ।

नवमालिका—सहि, विसअंतरासत्तमाणसत्तणेण सहसा ण संभरामि । अणुसंधम्मि दा । [सखि, विषयान्तरासक्तमानसत्वेन सहसा न संस्मरामि । अनुसंधास्ये तावत्]

सारसिका—(उपसृत्य) सहि णवमालिए, जइ अहं तुहअ हिअआहिमद अस्स ता वदेमि तदा का दे पडिवत्ती ? [सखि नवमालिके यद्यहं तव हृदयाभिमतस्य वदामि तदा का ते प्रतिपत्तिः ?]

नवमालिका—(स्वगतम्) देइए क्खु चित्तफलअं अहिमदं (प्रकाशम्) सारसिए कह—

[देव्याः खलु चित्रफलकमभिमतम् (प्रकाशम्) सारसिके कथम्]

तस्सिं जणे असुलहे विसअत्तेण
आलंविए विसमइ अरइअ एव्वं ।
देहो वि ··· उमदोत्थि हला णएणिहं
किंणाम चित्तफलअस्स तहा कहा वि ॥१२॥

[तस्मिन् जनेऽसुलभे विषमत्वेन
आलम्ब्य विषमयो अरतिश्च एवम् ।
देहोऽपि उन्मदोऽस्ति सखि नेदानीं
का नाम चित्रफलकस्य तथा कथापि ॥]

राजा—गरीयान् विप्रलम्भोच्छ्वासः ।

सारसिका—ता किदं आलविआइ, तुह उअसप्पणे विण अहिमदः । [तत् कृतमालपनैः, तव उपसर्पणेऽपि नाभिमतः]

नवमालिका—सारसिए, किं तुएदावेउती रइ । [सारसिके, किन्त्वेतावती रतिः ]

राजा—(स्वगतम्) अतिमुग्धेयम् । न हीदमुपपन्नम्

वयस्यासावस्या यदपि सहते सङ्गमयितुं
मया सार्द्धं नव प्रचलति चकोरीदृशममुम् ।
प्रियायाः लावण्यातिशयसहकारेण सहसा
महीयान् पुष्पेषुः प्रभवति नहीयानपि कुतः ॥१३॥

नवमालिका--( सलज्जम् ) सहि सारसिए, किं एव्वं मं उवहसेसि । [सखि सारसिके, किमेवं मामुपहससि]

राजा— (स्वगतम्) कथं पारमार्थिकेऽपि परिहासबुद्धिः । तन्नयुक्तमतः परं प्रेयसीमायासयितुम् (प्रकाशम्) सखे रौहिणायन, समर्पय चित्रफलकमत्रभवत्याः । विदूषकः(उपसृत्य) भोदि णवमालिए, गेण्ह एदं । [ भवति नवमालिके गृहाणैतत् ] (इति चित्रफलक— मर्पयति । ) नवमालिका—( स्वगतम् )

कहं महाराअस्स पियवयस्सो, तं च्चेअ एदं चित्तफलअं ; अलं एदेण परिच्छिमेण ( प्रकाशम् ) सहि चंदिए, देइए दंसइदुं गेण्ह एदं । मम उणो एण्हिं देइए वाप्पणो वि ण को वि उवआरो ; [कथं महाराजस्य प्रियवयस्यः तदेवैतच्चित्रफलकम् । अलमेतेन परिश्रमेण ( प्रकाशम् ) सखि चन्द्रिके, देव्या दर्शयितुं गृहाणेदम् । मम पुनरिदानीं देव्या वात्मनोऽपि न कोऽप्युपकारः । ]
(संस्कृतमाश्रित्य)

स्वयं मलयमारुतः कलयतात्लतालोभतां
तनोतु वितनोरिषुः सपदि मे सपत्राकृतिः ।
करोतु सुरभिः क्षणं दुरभियोगतां मादृश
मम प्रणयिना विना किमनेन वाताविना ॥१४॥

राजा—(उपसृत्य)

वरोरु यदुपागमेऽभिनवरोपितां मन्यसे
परामनुपयापि मामनुपपत्तिमापाततः ।
स बिभ्रदनयोस्त्रिभाग .........स्पृहा
मिहानुपदमागतोऽभिमतमोजायताम् ॥१५॥

नवमालिका—(स्वगतम्) कहं एतस्सिं जणे हिं वि अत्तणो ऽप्पवहामि [प्रकाशम्] जेदु जेदु महाराओ। [कथमेतस्मिन् जनेऽपि आत्मनः प्रभवामि (प्रकाशम्) जयतु जयतु महाराजः]

चन्द्रिका—(संस्कृतमाश्रित्य)

अनुरागवशादथानुरागान्मृमनेत्रे मृगयाम्बभूव वि।
प्रहितोऽत्र तयोरनेन पूर्वः स्वयमेव त्वयमागतो द्वितीयः॥१६॥

ता अइमेत्तं गहिअ लज्जं आरोहि। [तदतिमात्रं गृहीतलज्जामारोहय]

(नवमालिका सस्नेहं राजानं पश्यति)

राजा—(स्वगतम्)

तिरश्चीनायामा स्रगिव कुमुदानामुदयिनी
हसन्त्याः केतक्याः नवकिसलयानां ततिरिव।
परागैः कर्पूराकृतिभिरिव वीथिः प्रसृमरा
सुधायाः धारेव स्पृशति दृगसौ मां मृगदृशः॥१७॥

अपि च—

सोल्लासं विषयोन्मुखं प्रचलिता धृत्वा तिरश्चीनय
व्यावृत्तोरनुरूपमाप्य समयं साम्याभिमुख्यत्यजः।
विस्मेरस्तिमितस्मितप्रमितहृद्भावो दयादृष्टया
लज्जाया हरिणीदृशोर्वितनुते माद्य स्मरापेक्षया॥१८॥

(प्रकाशम)

निजानुभरगोचरस्मरशरप्रहाराद्यथा
वितर्कितथाविधो बत मदीयहृद्भेदन।
मृणालवलयास्तृतादपि घृणास्पद कुर्वतां
सुजातनयने रुजां हर भुजानुबन्धेन मे॥१६॥

(आलिङ्गच। स्वगतम्)

दरक्वणितकङ्कणेऽन्यतरमात्रसंबन्ध्यपि
भुज······वशादपरिनिष्ठितोत्पीडनः।

मृणालहरिचन्दनद्रवमयीं वहन् शीतता

बहिर्विषयमोषकृन्नवनतभ्रुवोऽङ्कग्रहः ॥२०॥

नवमालिका—( संस्कृतमाश्रित्य)

उच्चैरहस्कर—सठस्रमह······

दुस्शंबरस्य मम पंचशरस्य······ ।

व्यावृत्तिरस्ति दयितानयनस्वरूप

सिद्धौषधी-किसलया नववैभववेन ॥२१॥

सारसिका—देश्र, मुहूत्तं विससीग्रदु [देव मुहूर्त्तं विश्राम्यताम (?) ]

(राजा नवमालिकां करे गृहीत्वा सपरिवार उपविशति)

नवमालिका—(स्वगतम्)

जाई मए सहसदोहि उदोरिग्राइं

ता सुंभमाकलिग्र काइ वि ग्रक्खराइं ।

ग्राग्रस्मिंपाइ इमिणा भरि कण्णताइं

एंति ण्हि मज्जइ ग्रभूमिग्रलंमिग्रप्पा ॥२२॥

राजा—प्रिये नवमालिके,

सध्रीचीभिः सह विरहजां वेदनां वेदयन्त्याः

पीतान्येव श्रवणसुभगं भावुकान्यक्षराणि ।

मामुद्दिश्य प्रणयवशतः तद्विवक्षानुसारा—

द्वैलक्षण्यं किमपि दधति श्रोतुमिच्छामि तानि ॥२३॥

नवमालिका—महाराश्र, किमिश्रं वि मं एव्वं दूमेसि ( ? )

[महाराज किमिवापि मामेवं दूनोषि]

राजा—(प्राचीनमवलोक्य) प्रिये पश्य पश्य ।

लोकान् प्रज्वलयन् तमांसि दलयन् पद्मानि सम्मीलयन्

नक्षत्रानवहेलयन् वहलयन् भास (:स ?) मुद्वलयन् ।

प्रेमाञ्छङ्खलयन् क्रुधं विदलयन्नान्दोलयन् मानसं

भ्रान्तीर्दुःस्खलयन् वधूः प्रबलयन्······नभः शोलयन् ॥२४॥

किञ्च

नारीणां तुलयन् मुखं विपुलयन्वारीन्दुकान्तं स्रव-
त्य दुस्तिमिरद्विपस्य विकरान्स्फारीभवन्त्यस्त्वषः (?)।
(ने) दीयस्त्वधिया जनस्य जनयन् दिक्कूलमादीपयन्
मुक्तादीनवम ... विरहिणां वादी सुधादीधितिः ।२५।

नवमालिका (सलज्जम्)

आआवत्तण सीहरीहि सहसा जोण्हाहितह्राइआ
चक्काइ (?) आअहिदीहिआ परिसरे रेहंति भिस्साठुआ ।
एतेणं मअणासुअव्वगणअस्सेण सम्मसिआ ।
सेअेणच्चिवचंदिआअवसमुस्सप्पसपेण ओल्लाइआ ॥२६॥

राजा—आकर्ण्य

भूयो गुणानि कुसुमायुधदीपनानि
साकूत ....................रसं वहन्ति ।
वर्णान्यमूनि वरवर्णिनि कर्णयुग्मम्
आकर्णयन्तव (?) भवत्यधमर्ण एव ॥२७॥

अपिच-

स्वैरं कैरवका जनेषु सहितोत्साहायसाहायकं
निर्देशं दधती कुशेशयकुलं संवेशयन्ति बलात् ।
सामस्त्येन वितन्वतो तरलतामोदन्वन्तोनामपा-
मुन्माद्य(?) ..कौमुदीह (?)सहसा हेतुर्द्दशां कौमुदी ।२८।

अन्यच्च—

पीयूषद्रवपारणापरिकरं लोकस्य बिभ्रत् पुरो
नासत्योदितमम्बरे सगतिकं नीलेन साकं स्थितम् ।
वक्त्रे ..समशरेषुकरजाधानञ्च धामादथ (?)
दिव्यं वारिरुहारिभैन्दवमिदं सन्दृश्यतामैन्दवम् ॥२९॥

चन्द्रिका- (संस्कृतमाश्रित्य)

अभिनवदयितायाः सन्निधानं दधानं
प्रमदमदमदभ्रं बिभ्रतं वीक्ष्य देवम् ।
तरुणमरुणिमानां पानमामर्षरूक्ष्य
वहलमुपवहन्ती दृश्यते चन्द्रलेखा ॥३०॥

(नवमालिका भयं नाटयति)

राजा—चन्द्रविषयकोऽप्यभेदारोपः खल्वयम् । तदलं भयेन ।

सारसिका—देअ, सच्चं । देई आअच्छेदि । [देव, सत्यं देवी आगच्छति ।]

राजा—( विलोक्य ) अहो संवादः !

( ततः प्रविशति मधुमाधवीद्वितीया देवी )

देवी—जेदु अज्जउत्तो [जयत्वार्यपुत्रः ]

( सर्वे उत्तिष्ठन्ति )

राजा—प्रिये, इत आस्यताम ।

देवी—अज्जउत्त, उवक्कंतविरुद्धं क्खु एहिं पिएत्ति आमंतणं। ता हं गमिस्सं । ण जुज्जइ तुम्हाणं अंतराइ भोइदुम् । [आर्यपुत्र, उपक्रान्तविरुद्धं खल्विदानीं प्रियेति आमन्त्रणम् । तदहं गमिष्यामि न युज्यते । युष्माकम् अन्तरायं भवितुम् । ]

राजा—(बलादुपवेश्य)

भवत्सहचरीजने प्रविशतीह देव्या अपि
प्रवेशमनुमिन्वता चपलचेष्टितेनामुना ।
मृगाङ्कमुखि रौहिणायनबटुब्रुवेणाहित-
भ्रमा वयमपि ध्रुवं तव दिदृक्षयाभ्यागताः ॥३१॥

विदूषकः (स्वागतम्) कहं एत्तिअमेत्तं अम्हाणं उवओओ [ कथमेतावन्मात्रमस्माकमुपयोगः ]

देवी—अहं पि इमस्स बम्हणवडुअस्स एत्थ आअमणेण

महाराअस्स वि आअमणं तक्केंती एत्थ आअदम्हि। दिट्ठिआ महाराअस्स वि अ समविप्पआसो विसंवाइणो संवुत्तो। [अहमपि अस्य ब्राह्मणबटोरत्र आगमनेन महाराजस्याप्यागमनं तर्कयन्ती अत्र आगतास्मि। दिष्ट्या महाराजस्यापि च श्रमप्रियासो ऽपि संवादी संवृत्तः]

नवमालिका -- (स्वगतम्) उवक्खित्तं क्खु किं वि एदाए! [उपक्षिप्तं किमप्येतया]

राजा—देवि यथा त्वं आत्थ.......परन्तु देवी प्रतिरूपकदर्शन-.... .... .... .... .... .... ... ...

देवी—अज्जउत्त, ण क्खु (?)... ] ... .... ...
णुकप्पेण कज्जणिव्वाहो उत्तो।

[आर्यपुत्र, न खलु... ... ... ... ...
नुकम्पया कार्यनिर्वाहो युक्तः।]

विदूषकः—देइ, णं भणामि। खमिज्जदु एक्को पिअवअस्सस्स अइक्कमोत्ति। [देवि, ननु भणामि। क्षम्यतामेकः प्रियवयस्यातिक्रमः इति।]

देवी—(स्वगतम्) मम वित्ति सेसो। अहवा को इमाणं अवराहो | एअस्स अहं व्व अवरअम्मि। [ममापीति शेषः। अथवा कः एतेषामपराधः। अस्याहमेवापराध्ये) (संस्कृतमाश्रित्य)

याहं प्रतिच्छन्दकदर्शनेन
प्रत्यूहमेतस्य विधित्समाना।
साक्षादिमां सैव गवेषणाय
सम्प्रेक्षयन्ती न किमप्यवैषम् ॥३२॥

राजा अमूस्तव नियोगतो वयमपि भ्रमादागताः
प्रिये प्रभुतया मयि त्वमपराधमारोपय।
अनेन पुनरीदृशा व्यतिकरेण सिद्धिस्पृशा
चिराय सदिरेक्षि मे त्वयि गिरां विरासः कृतः ॥३॥

देवी—हंजे मउमाहवि, जइ तुमं इमाइं वग्गं अणुप्पहिदिदा ता इमाओ अ (?)··

गच्छेह्मि। [ सखि मधुमाधवी, यदि त्वमेतं बर्गमनुप्रेषिता तदिमाश्च····　····　····　····गच्छामः ]

मधुमाधवी—जं देई आणवेदित्ति (ताः प्रति) हलाओ आअ-गादो, एघआहेम्ह। [यद्देवी आज्ञापयति (ताः प्रति) सख्यः, आगच्छत, प्रयामः ]　(नवमालिकादयस्तथा कुर्वन्ति)

देवी (उत्थाय। स्वगतम्) किंत्ति एव्वं विहेवि अवराहे णामा-लिकाए उवरणमे मे तारिसो कोपि ररइमलेस्सिं (?) अंतेवासिणित्ति णेहो एदस्सिं अवरज्जइ [ किमिति एवं विधेऽप्यपराधे नवमालिका उपर··········मे तादृशः कोऽपि ··········अन्तेवासिनीति स्नेहः एतस्मिन् अवरज्यते ।

राजा— (उत्थाय) देवि,

वस्तुस्थितावितरथा　　प्रतिभासमाने
सत्यन्यथैव बलवत् सहसा द्वितीयम् ।
भावालसत्स्मितसुधारससान्द्रताना —
मर्थी जनोऽपि तव तन्वि····यत् ॥३४॥

(देवी परिवृत्य सक्रोधानुरागं पश्यन्ती सर्वाभिस्सह निष्कान्ता)

विदूषक·· दिट्ठिआ कुविदाए वि देइए वि देइए अहं ण गहिओ। [ दिष्ट्या कुपितयापि देव्याहं न गृहीतः ! ]

राजा--वयस्य, नूनमस्य शंकमानया देव्या नापराधपक्षमात्रानु-रूपमादाय न प्रतिष्ठितम् (प्रस्थितम् ?)। तदत्र देवी प्रसादनमेव प्राप्तकालं पश्यामः। परमार्थतस्तु

देवी कुप्यतु मय्यथार्पयतु वा कामोऽप्यसह्यव्यथां
एतावन्परिशीलनं प्रति भवेद्यत्प्रापि तच्छीलता
बाणौघैरपि नह्यतादपि च मान्दन्दह्यताञ्चन्द्रमाः ।
तस्याः नीलसरोजसुन्दरदृशो नोन्मीलतीतोऽधिकम् ।३५।

( इति निष्क्रान्तौ )

( इति तृतीयोऽङ्कः )

## अथ चतुर्थोऽङ्कः

( ततः प्रविशति कञ्चुकी )

कञ्चुकी—कथं प्रभातप्राया रजनी ! तथा हि—

दृश्यन्ते विरला मधूकसुकलस्थूलप्रतीकस्पृश-
स्तारा: किञ्चिदुषःप्रकाशवशतो विच्छायतामागताः ।
प्रेयोभिस्सह केलिविभ्रमभृतां व्योमाश्मगर्भाङ्गतो
देवी तां कवरीभरादिव परिभ्रष्टाच्च्युता मल्लिका ॥१॥

(सवैक्लव्यं परिक्रम्य)

वहति वहति यत्ने विग्रहस्पन्दलेखा
दहति दहति शक्तीरिन्द्रियाणि प्रमोहः ।
उपहृति महतास्यं विस्रसाया विकारे
सहति किमहतिग्मं मानसं मेऽधिकारम् ॥२॥

आदिष्टमद्य देव्या-सारसिकाचन्द्रिकयोर्नवमालिकायाश्च मिथो यथा न भवति मिलनं कतिपयदिवसानि तथा विधेयमिति । तेन मयापि तिस्रः ताः अन्तःपुरैकदेशवर्तिप्रकोष्ठेषु प्रत्येकं रक्षणीर्दत्वा पृथक निधाय स्थापिताः ।

(विचिन्त्य)

देव्या दुराग्रहविजृम्भितमात्रमेतत्
तस्या नियोगपरिपालनमस्मदादेः ।
व्यक्तेस्तथाविधगुणातिशयान्वितायाः
कल्याणमेव कलयामि मनागुदर्कम् ॥३॥

(आलोक्य) कथमुदितप्राय एव भगवान लोकदीपः । तथाहि—

दिवि भुवि विनिविष्टा कौमुदीकान्तिरुच्चैः
दृशि कमलकुलेवा बोधशक्तिः प्रवृत्ता ।
कुमुदकिसलयानां कोकयूनाञ्च वर्गः
प्रसरति निबिडत्वं बिभ्रदन्योन्ययोगः ॥४॥

(अग्रतो ऽवलोक्य) कथमेष देवः !

बह्वीं रुजां विरहजां नवमालिकायाः
देव्या प्रसादजनिताञ्च मुदञ्च दूनाम् ।
बिभ्रद्विभाति रजनीं प्रथमक्षणस्थो
भूयो विशिष्टदिनधूसरिमेव चन्द्रः ।।५।।

विष्कम्भकः

(ततः प्रविशति यथानिर्दिष्टो राजा)

राजा-- स्वजातिस्वाभाव्याद्बहिरधिककोपेन कलुषं
मनोभूमाहात्म्योल्लसदविसरान्तः प्रणयकम् ।
तदानीं बिभ्राणं हृदयमयथावच्चरितवत्
प्र······ भूद्देवीमनुनयलवादेव सुनयः ।।६।।

तथाहि

प्रथमविहितिप्रत्यादेश·········तरलायिता
······नाविर्भूत प्रेमातिरेकविकाशिनाम्
मयि परिमुहुर्विन्यस्यन्ती दृशं सरला····
वरतनुतनूबन्धं प्रत्यग्रहीद् भुजवीरुधोः ।७।।

(विचिन्त्य)

तस्याः कुशेशयदृशोर्विरहेण दून-
मेतावतैव किमनिर्वृतिमेति चेतः ।
सान्द्रावणीयमुदकेन सहस्रधापि
किं स्यान्महीयसि···तं दहने मृणालम् ।।८।।

(स्मृतिमभिनीय)

पूर्वं चाक्षुषमेव तद्विषयकं चेतोपहारक्षमं
तद्वृत्तेरथ चातकस्य विषयी भावस्य का वा कथा ।
वैलक्षण्यमपाङ्गसङ्गिविषयं तत्रापि मन्दस्मितं
किं वाच्यं गमनेक्षणे विवलितग्रीवं पुनर्वीक्षणम् ।।९।।

तथा हि-अगणितसखीवर्ग..........ललित—विग्रहव्यथमप......देवी

.......सभ्रूतस्मिन्ननेहसि तत्क्षणास्तिमितं  कमलाकराणामीदृशं....

(नेपथ्ये)

...महि संदेहविदा। मा पुणो एव्व आ:...उठावेहि। एक्कवारं देवेण रक्खिदोम्हि। ता किं मं वि ताहिं समानावस्थं कारेसि (...मयि सन्दिग्धा मा पुनरेव आ......उत्थापय। एकवारं देवेन रक्षितोस्मि। तत्किं मामपि...  ...  ...करोषि)

राजा—(प्रतिसन्धाय)

चरति सचमत्कारं चेतश्चकोरशिशोरिव
अचिरपरिचयादिन्दोर्लेखेव च मे वरवर्णिनी।
अपिहितवती कारो धाराधरावलिमन्तरा
कथमहह तो देवी वर्षा इवोद्धतचञ्चला॥१०॥

(विलोक्य) आर्य गौतम! मुहूर्त्तमुपवेष्टुमिच्छामि।

कञ्चुकी (उपसृत्य) देव! नन्वियं सन्निहितैव बकुलावलिक
......मध्यवर्तिमणिवेदिका।

राजा—(उपविश्य, दक्षिणाक्षिस्पन्दमभिनीय स्वगतम्)

देवीप्रसादमुपयातवशो (?)......
सा दुर्लभैव सहसा नवमालिकापि।
प्रस्पन्दमाकलय किन्तु विलोचनस्य
वामेतरस्य न विपाकमवैमि तादृक्॥११॥

(प्रविश्य प्रतीहारी)

प्रतीहारी—जेदु महाराओ। अमच्चो णिदीणिही विण्णवेदि एसो अंगराअस्स अंतरंगामच्चो दारभूमिं उवट्ठिदो।

[जयतु महाराजः। अमात्यो नीतिनिधिः विज्ञापयति-एष अङ्गरा-जस्यान्तरङ्गामात्यः द्वारभूमिमुपस्थितः]

राजा—अमात्येन सहैव त्वरितं प्रवेश्यताम। गौतम! देव्यप्याहूयताम।

(कञ्चुकी निष्क्रान्तः)

प्रतिहारी—जह देवो आणवेदि। यद्देव आज्ञापयति) इति निष्क्रम्य ताभ्यां सह प्रविश्य प्रभुं प्रति) इदो अमच्चो (इत अमात्यः)

सुमतिः—(स्वगतम) अहो वैभवमवन्तिराजस्य! तथाहि—

प्रवेशप्रस्तावाभिमतियुजतत्तज्जनपदो-
पहारप्राचुर्यं प्रतिपदकृतं पत्रमपदा-
मनुद्वेगोद्वेल्लज्जलधिजलवत्सङ्कुलतया
प्रयासेनापीयं न सुकरगतिर्द्वारपदवी ॥१२॥

अपिच

अश्वीयेन मरुन्मयीव करिभिः भूभृन्मयीव ध्वजैः
गङ्गाभङ्गमयीव मौक्तिकगुणैर्गङ्गामयीवाभितः।
स्वर्णैर्मेरुमयीव कुङ्कुमचयैः प्रातर्मयीवोज्ज्वलैः
.......द्यमयीव कौतुकमयी भाति प्रतीहारभूः ॥१३॥

नीतिनिधिः—(स्वगतम)

प्राप्तायां भुवि पश्यतां प्रतिबलक्ष्मापालमौलिस्फुर-
न्मल्लीदाममये ................सदस्यङ्गीकृतेनाज्ञया।
दिव्योक्तिप्रतितत्वभर्तृविषयक्ष्मावर्तिवि............
.........राज्ञि नोपयत्तावात्वन्त........सन्तुष्यति..... ॥१४॥

प्रतिहारी—उपसप्पदु अज्जो। [उपसर्पतु आर्यः]

उभौ—विजयतां देवः।

राजा—अभिवादये। इत आस्याताम्।

(उभावुपविशतः)

राजा—आर्य! अपि अनामयं तत्रभवतोऽङ्गराजस्य हिरण्यवर्मणः?

सुमतिः—देवेनैवं सम्भाव्यमानस्य सर्वत्र कुशलमङ्गराजस्य। प्रथमं भगवत्याः सर्वमंगलायाः प्रसादादेकं कन्यारत्नमुत्पन्नम्।

राजाः—श्रुतपूर्वं द्य तदस्माभिर्यस्यां प्रसूतायां दिव्या सरस्वती प्रादुरभवत्। अस्याः करगृह....... ......साम्राज्यं भविष्यतीति............ श्रुतम्। ततस्ततः।

सुमतिः—यथादिष्टं देवेन। तदैकदा मन्दाकिनीतीरे सहचरीद्वयेन सह विहरन्त्येव न ज्ञायते कुत्र गतेति। ततः प्रभृति चिरादृष्टप्रसादायां देव्यामिदानीमुत्पन्नः कुमार इति देवं दिष्ट्या वर्धयितुमिह प्रहितोऽस्मि। ..................यथावसरं देवस्य दृष्टिविषयो भविष्यति।

राजा—प्रियं नः।

(प्रविश्य देवी)

देवी—जेदु अज्जउत्तो। (जयत्वार्यपुत्रः)

राजा—देवी! दिष्ट्या वर्द्धसे भ्रातुरपत्यलाभेन।

देवी—पिअं मे। (प्रियं मे) (उपविशति)

(कञ्चुकी प्रविश्य)

कञ्चुकी—देव! एष प्रभाकरनामा कश्चित्तापसो ब्राह्मणो देवदर्शनार्थं प्रतिहारमध्यास्ते।

राजाः—अवलम्बितं प्रवेशय।

(कञ्चुकी निष्क्रम्य, तेन सह प्रविश्य)

राजा—(दृष्ट्वा) स्पृहणीया खलु निःस्पृहता!

तथाहि—

निः पूर्ववस्तु परिदर्शनसद्विकारा।
नो राजगौरवभरेण नियन्त्रिणापि।
स्वाभाविकं प्रचरतो वनसीमनीव
सैव प्रसन्नसुभगा कृतिरस्य दृष्टिः ॥१५॥

(उत्थाय) भगवन्नभिवादये।

(प्रविश्य तापसः)

तापसः—देव! कल्याणभाजनं भूयाः।

देवी—भअवो पणमामि। [भगवन्! प्रणमामि]

तापसः—वीरप्रसूर्भूयाः।

राजा—(उपविश्य) भगवन्! भवदागमनसङ्गमस्य विषये तावदस्ति कुतूहलेन समं प्रश्नस्यावकाशः।

तापसः-देव ! श्रूयताम् । अस्ति सकामाराधनायां देवताप्रसादादासाद्य दिव्यरत्नं यस्यायं प्रत्ययः ।

बुद्धिर्न स्खलनमुपैति धर्ममार्गा-
दायुष्यं भवति चिराद्वरं हि दत्ते ।
यद्देशे निवसति तत्र निष्प्रभावा
जायन्ते रजनिचरादयो ऽन्तरायाः ॥१६॥

तच्च तपोन्तरायकारिभ्यो दृष्टादृष्टदुष्टेभ्यो रक्षणार्थं मया ध्रियमाणमासीत् । एकदा दण्डकमाश्रित्य तपस्यति मयि केनचिद् राक्षसेन दैववशाद्विमार्गेणापह्रियमाणं कन्यकात्रयमेतत्प्रभावापहृतशक्तेरतस्य करतलात्पतितमिति तत्प्रत्ययदर्शनम् ।

सुमतिः—किं नाम तदेव स्यात्

राजा—अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः ।

तापसः—एवं क्रमेण तीर्थान् पर्यटन् इदानीमस्य सकलसुरासुरमौलिचुम्बितचरणतामरसपरागस्य भगवतो महाकालस्य सन्निधौ तपस्तप्तुमिच्छन्निहागतोऽस्मि । तत्रभवद्भुजपरिवकृतरक्षणतया स्वत एव नान्तरायाः प्रभवन्ति । निवृत्तस्पृहाणाञ्च नैवंविधाः पदार्था उपादेयाः । अवश्यकार्यप्रतिपत्तिकंचेदं तदनुरूपप्रदानवर्णनं वनदेवतोदन्तमिति । तद्गृह्णातु (इति राज्ञे समर्पयति)

राजा—अविचारणीया भगवदनुग्रहाः (इति आदाय चिरं निर्वर्ण्य देवीहस्ते समर्पयति)

देवी—(स्वगतम्) हद्धि । अज्जउत्तेण अदिपज्जन्तमेदं क्खु एदं मम हत्थादो ········ । [ हाधिक् ! आर्यपुत्रेण ·· ·····खलु एतद् मम हस्त··········· ······ ]

(दृष्ट्वा सर्वे विस्मयन्ते)

राजा-(स्वयमादाय) भगवन्नद्भुतमेतत् !

तापसः-अस्त्येवमस्य प्रसिद्धिः- यै प्रजासु विषम नरनाथा योषितोऽपि च प्रतिकूला तत्करोद्धृतमपि व्यवधते ।

(देवी लज्जां नाटयति)

तापसः—स्वस्ति भवते। (इति निष्क्रान्तः)

नीतिनिधीः (स्वगतम्) चिरात् खलु समुपस्थिता मनोरथसिरस्माकम्। यतः

तदेवेदं कन्यात्रयमभिहितं यद्भगवता
मया देवीहस्ते यदिह चिररात्राय निहिता।
तथाप्यन्यत्तत्रान्यतममिलितात् किञ्च नयति
प्रतीपं दृष्ट्वापि क्वचिदपि········ कृतम् ॥१७॥

राजा—(स्वगतम्) अपीदानीं देवी तस्या नवमालिकायाः मया समं समागमप्रतिषेधं न कुर्यात्।

देवी—(स्वगतम्) पइणो पडिउलेति परंपरागअस्स मं दुन- अमच्चस्स पुर डम प्पवादो संवुत्तो। ता ण प्पवहामि मुहं दसेदु (जनान्तिकम्) हंजे! महुमाइ विलहुणअ चंदिआ सरसिआहिसह णअमालिअं एत्थ आणेहि। [स्वगतम्) प्रथमं प्रतिकूलेति परम्परा- गतस्य मां दुनोति। अमात्यस्य पुरः ········ पवादस्संवृत्त। तन्न प्रभवामि मुखं दर्शयितुम् [जनान्तिकम्] हञ्जे मधुमाधवि। लघु नीत्वा चन्द्रिका सारसिकाभ्यां सह नवमालिकामत्रानय]

मधुमाधवी—जं देइ आणवेदित्ति (यद्देव्याज्ञापयतीति)

(निष्क्रान्ता)

(ततः प्रविशति ताभिः सह नवमालिका)

नवमालिका—हला महुमाहवि किं णिमित्तं क्खु देइए महाराअस- आसं आहदा। [हलामधुमाधवि। किं निमित्तं खलु देव्या महाराज- सकाशमाहृताः]

मधुमाधवी—सहि देइ एसा प्पहवदि अहिम अणहिम अवाए क्वचि अणखिाणम अमेण परिवट्टते सबए ण उज्जदि किं कहोइ। [सखि देव्येषा प्रभवति·········· ·········· ········ ]

नवमालिका—अह एहिं तस्स के सण्णहिदा। [अथेदानीं तस्य के सन्निहिता]

मधुमालती—अमच्चो णीदिणिहि अंगदेसकुमारूप्पति ········· ········ ········। [अमात्यो नीतिनिधिः, अंगदेश कुमार····

नवमालिका ( स्वगतम्, सहर्षम् ) ते तादस्स कुमारुप्पतित्ति कस्स रसाअणाइं अक्खराइं सुव्वं । [तातस्य कुमार तीति कस्य रसायनानि अक्षराणि श्रुतम् ]

चन्द्रिका—सहि सारसिए ! दिट्ठिया वठ्ठामो । [सखि सारसिके ! दिष्ट्या वर्द्धामः । ]

मधुमाधवी—किंत्ति उभेणं देवी प्पसाएण (स्वगतम्) एवखु रत्ति ........... .. .. .......पमेत्तेण एदस्स णिमित्तेण होदव्वं । [ किमति उभयं ननु देविप्रसादेन (स्वगतम्) एतत् खलु रात्रि.......................मात्रेण एतस्य निमत्तेन भाव्यम् [ भवितव्यम् ] (संस्कृतमाश्रित्य)

वचनाददि पूर्वमेव देवीमपरेषामपि सम्प्रधारयन्त्यः ।
न मुखस्य तदा प्रसादमापुः परतोऽभूः सुमतेर्यथाभिधानात् ॥

नवमालिका—(स्वगतम्)

> विहिणो विहवेण सोहणिज्जं,
> दुरवस्यं अहमीरिसुमइस्स ।
> समग्धा अस्स एण्हि ,
> प्पहविस्सं पुरई कहं पुहोणं ? ॥१९॥

विधे र्विभवेन सोभनीयं

(प्रकाशम्) हंला३ एव्वं विह विडबवणमवेक्खि अ वर ........ ण परिचाउत्ति । [हलाः एवं विध विडम्बनमवेक्ष्य ............... ]

सख्यः—किंत्ति ? (किमंति)

नवमालिका—

> अणुगाहो यस्स मुहुत्तमेत्तं
> विणिगाहो चिट्ठिदि दीघकाल्लं ।
> तदसहीउ खणमेत्त दुःखो
> सहणिज्जो व उजीअमोख्ख सख्वः ॥२०॥

मधुपालती – मा एव्वं कहेहि । किं ण आणासिजं जिअंतो महाई

पेक्खइंतीदि । [मैवंकथयांकिं न ज्ञातं । 'जीवन्तोभद्राणि भद्राणि पश्यन्तीति]( परिक्रामन्ति )

राजा—(विलोक्य)

निर्विस्मिता दृष्टतयोः समान-
प्रधानयोरन्तरमावसन्ती ।
राहूपरागोत्तरकालवृत्तिः
कालेव कान्त्वा शशिनो विभाति ॥२१॥

तत्कोऽयमीदृशोत्सव हेतुः स्यात् (विचिन्त्य) नूनमस्य दिव्यरत्न-स्यायं परिणामः (विलोक्य)

स्तोकोन्नाभिमुखीभवत्स्तनभरत्का... वनालं
किञ्चित्सम्मुखताविशेषनमित प्रत्याननाम्भोरुहं ।
मुग्धाक्ष्या जघनश्रमेण चरणप्रोत्क्षेपनिक्षेपयोः
सक्षेपत्वरमभ्युदित्वरतरां प्रीतिं प्रसूते गतिम् ॥२२॥

नवमालिका –(राजानमवलोक्य, स्वगतम् संस्कृतमाश्रित्य)

देवीमवेक्ष्य कुपिता तदधीनताञ्च
देवस्य तादृशमपि स्वदशाविशेषम् ।
प्रायो न लभ्यमितो यन्निरणीय... तद्
दैवात्सुदर्शनमवाप्तमिदं प्रियस्य ॥२३॥

(सुमतिमवलोक्य)

यत्पित्रोः सुचिराददर्शन भुवं दुःखं समासादितं
व्यासङ्गान्तरजन्ममानिजसजातीयेन मन्दायितम् ।
सम्प्रत्येकविलोकनेन सुमतेरेकप्रवाहीभवत्
प्रत्यग्रत्वमिवागतं परिभवन्त्यन्यानि दुःखानि तत् ।२४।

सुमतिः (नवमालिकां सखीद्वयसहितां दृष्ट्वा) अथ कोऽयमस्मा-कमभ्युदयः ? किं वा सन्निवेशसादृश्यं मां विडम्बयति (विचिन्त्य)

सैवासाविति संविदो न घटते प्रामाण्यमेकान्ततः
संवादो यत आकृतेरतितरां स्यात्काकतालीयतः ।

प्रत्यक्षात्समनन्तरं मम चिदादन्तर्मनो भावुकाद्
यद्वृत्तो ऽभ्यसितं विलक्षणमिदं नैतत्तु साधारणम् ॥२५॥

राजा—(सुमतिं नवमालिकाञ्च विलोक्य, स्वगतम्) किमेतत ?
अन्योन्यालोकलब्धावसरपरिसरदुःखबाष्पाविलान्ता
वात्सल्याधीयमानप्रथमपरिचयस्निग्धतामुद्वहतः ।
दृक्पातास्तुल्यरूपा यदपि तदपि तानस्य सम्पश्यतोऽभू-
रस्योस्त्वेनं समीक्ष्य स्वजनमिव परं संस्मरन्त्याः प्रतीमः ॥

सुमतिः (स्वगतम्)

सेयं राजकुमारिका कुशलिनीत्यानन्दसान्द्रायितं
सम्प्राप्ता परिचारिकापदमिति प्रत्युद्यदुत्तापकम् ।
चेतः सम्प्रति तुल्यकलिकमिलज्जीमूतरेखापयो
धारासिक्तविवस्वदातपजरूकनीपप्रसूनायते ॥२७॥

नवमालिका—(उपसृत्य) जेदु जेदु देओ । [जयतु २ देवः ]
सुमतिः—राजपुत्रि ! कथमीदृशीमवस्थामनुभवसि ?
(नवमालिका सास्रं पश्यति )

राजा— कथं परम्परानुवर्तमानमूर्धाभिषिक्तवंशप्रभवस्याङ्गराजस्य हिरण्यवर्मणो दुहितेयम् ?

सुमतिः—देव ! एवमेवैतत् ।

देवी—(स्वगतम्)

दइअम्मि्ह्ं पवहमाणा
पडिउल्लातण मत्तणो वेणेउ ।
स अणम्मि वि तारिसित्ति वी ए
अव वाएपडिअत्ति किं चरेमि ॥२८॥

[.... .... .... .... ... .... .... .... .... ....
.... ... .... .... .... .... .... ....
.... .... .... .... .... .... .... ....
.... .... .... .... .... .... ....
.... ....]

(प्रकाशम्) एहि वच्छे परिस्सज्जेहि मं, ……… ……………
जाए मुहं दट्ठुं वेअएअं आणंतीए मए क्खु आइक्कं ……………
ता खमिज्जंतु। [एहि वत्से परिष्वजस्व मां ………………
यस्या मुख द्रष्टुमेवात्रानयन्त्या मया खलु……………………
तत्क्षाम्यतु……। ]

(इत्यालिङ्ग्योपवेशयति)

सख्यः—(स्वगतम्) दिट्ठिआ एव्वं संवुत्तम (दिष्ट्या एवं संवृत्तम् )

सुमतिः--देवि ! कुतः पुनरागमोऽस्याः ?

देवी - अमच्चो जाणादि । [अमात्यः जानाति]

नीतिनिधः--दिग्विजयप्रसङ्गेन दण्डकारण्ये प्रविष्टेन मया सखीभ्यां सहितेयमासादिता।

राजा—(स्वगतम्) नूनं यास्य दिव्यरत्नस्य प्रभावात रक्षसा परित्यक्ता, सैवैयम।

नीतिनिधिः-ततो देवस्य साम्राज्यकामनया देव्या अधिवेदन निबन्धननिर्वेदपरिजिहीर्षया च विशेषमनाख्यायेव देवी हस्ते निक्षिप्ता।

देवी—अमच्च ! एत्तिअसेत्तस्स अणुदावस्स आअणद्धहं णिमिद्दा। [अमात्य ! एतावतो ऽनुतापस्य कारणम्…… …अहं निर्मिता]

सुमतिः-देवि ! नेदमनुशयस्थानम्।

विरहस्स सुहृज्जनेन सार्द्धं
निदधानो भवदीयसन्निधाने।
स्वजनेन समं वियोगमस्या
विधिरात्यन्तिमादधे न तावत्॥२६॥

देवी--(स्वगतम्) तक्किदं च्चेच्च क्खु मए इमाए उवरिकोणाणु रज्जइ (प्रकाशम्) अज्जउत्त! परिणिज्जउ एसा किं विलंबेण [तर्कितमेव खलु मया अस्या उपरि को नानुरज्यते (प्रकाशम्) आर्यपुत्र परिणीयतामेषा किं विलम्बेन।

सर्व………(स्वगतम्) अनुरूपाभिनिवेशाना हि देवी

राजा--यथाज्ञापयति देवी (स्वगतम्)

देव्या समागम निषेधनमल्पमात्रं
कुर्वाणयाप्यनुगुणायितमत्र भूयः ।
बाष्पोद्गमात्क्षणनिरोध कृतापिदृष्टि
स्तन्वानेया विभवमज्जनलेखयेव ॥३०॥

विदूषकः--वअस्स ! अहं कुआसणे कदुं इदीविमि ।
[वयस्याहं कुशासने ·······

राजा--विधीयतां यथानुरूपम् ।

(देवी नवमालिकाया हस्तमादाय राज्ञो हस्ते समर्पयति)

राजा-(स्पर्शमनुभूय)

सञ्जीवनावधि भवामि नवप्रवाल-
प्रालेयशीतसुकुमारतराभिरामः ।
स्पर्शप्रियाशयकुशेशयपल्लवस्य
सास्रं क्षणेन पुलकाकुलमातनोति ॥३१॥

विदूषकः—वअस्स ! इमाए सह पाणिग्गहणसाक्खिणं अणल--पदक्खिणं करेहि । [वयस्यानया सह पाणिग्रहणसाक्षिणमनलप्रदक्षिणं कुरु]

(राजा यथावददिति तथा करोति)

देवी-(स्वगतम्, संस्कृतमाश्रित्य)

रोहिणीहिमकराविव कान्तौ
जातवेदसमभिप्रतिभातः ।
रेखया भ्रमणरूपितया स्वं
विप्रलम्भमिव कुण्डलयन्तौ ॥३२॥

[सर्वे परिणयसमाप्ति नाटयन्ति

देवी--वच्छे णवमालिए

णिम्माहि भूसणणिअंसणसण्णिवेसं
इच्छावसा परिअणं उण आणवेहि ।
जादासि चंदमुहि देअ करग्गहेण
पाह्वे अहं वि अ तुमं व सुहासवत्ति ॥३३॥

[वत्से नवमालिके !

निर्मातृ भूषणनिवेशनशंसिवेशम
इच्छावशात्परिजनं पुनाज्ञापय ।
जातासि चन्द्रमुखि देवकरगृहेण
अहमिवत्वमपि वसुधासपत्नी ?

सुमतिः--देव ! परं विशिष्य सहचरी साधारण्यमस्यामनुवर्तनीयम् ।

नीतिनीधिः--देव ! किन्ते भूयः प्रियमुपकरोमि ?

राजा--एतदुत्तरमपि प्रियमस्ति । यतः--

भातृ ··········· ···कुशेशयदृशि संभावयन्त्यान्वयं
निर्मुच्यानुशयं स्वयं परिणयं देव्या वयं कारिताः ।
सम्बन्धोऽपि हिरण्यवर्मणि चिरं भूयः स्थिरत्वंगतः
स्थाणो दिव्यगिरा विपर्यय-गिरा जातापि राजेन्दिरा ॥३४॥

तथापीदमस्तु (भरतवाक्यम्)

धर्मं श्रुत्युदितं द्विजप्रभृतयो वर्णा भजन्तां निजं
भूपाद्द्विजमानतां विजहतु त्यक्तोपतापाः प्रजाः ।
सौहित्यं हविषा वहन् हरिहयो यच्छत्वभीष्टं पयो
जीयासु पुरुषायुषं सहृदया विद्यासु लब्धोदयाः ॥३५॥

नीतिनिधिः--एवमस्तु ।

[इति निष्क्रान्ताः सर्वे]

इति चतुर्थोऽङ्कः ।

॥ समाप्तेयं श्रीमद्विश्वेरपण्डितप्रणीता
नवमालिका नाम नाटिका ॥



